दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते । दन्तमांसानि पच्यन्ते मुखञ्च परिपोट्यते ॥ यस्मिन्स सर्व्वजो व्याधिर्महाशौषिरसंज्ञकः । दन्तमांसानि शीर्य्यन्ते यस्मिन्ष्ठीवति चाप्यसृक् ॥ पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः । वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च ॥ आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः । आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते॥ यस्मिन्नुपकुशः स स्यात्पित्तरक्तकृतो गदः॥ घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः॥मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥ वर्द्धनः स मतो व्याधिर्ज्जाते रुक्च प्रशाम्यति॥हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः ॥ लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः । दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ दन्तगतास्तु दालनः क्रिमिदन्तको दन्तहर्षो भञ्जनकः शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति ॥ दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः। दालनस इति ज्ञेयः सदागतिनिमित्तजः ॥ कृष्णाश्छिद्री चलः स्रावी ससंरम्भो महारुजः । अनिमित्तरुजो वाताद्विज्ञेयः कृमिदन्तकः ॥ दशनः शीतमुष्णञ्च सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात् ॥ वक्त्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् । कफवातकृतो व्याधि स भञ्जनकसंज्ञितः ॥ शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै । सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा ॥ दलन्ति दन्तवल्कानि शर्करयासहाज्ञेया कपालिका सैव दशनानां विनाशिनी॥योऽसृग्मिश्रेण पित्तेन यदादग्धो दन्तस्त्वशेषतः।श्यावतां नीलतां वापि गतःस श्यावदन्तकः॥ वातेनतैस्तैर्भावैस्तुहनुसन्धिर्व्विसंहतः । हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका चेति । जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा । पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च ॥ कफेन गुर्व्वी बहुला चिता च मांसोद्गमैः शाल्मलिकण्टकाभैः ॥ जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः । जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम् ॥ जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति ॥ तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यऽध्रुषो मांसकच्छपोऽर्व्वुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाकइति ॥ श्लेष्मासृग्भ्यां तालुमूलात्प्रवृद्धो दीर्घः शोफोध्मातवस्तिप्रकाशः । तृष्णाकासश्वासकृत्सम्प्रदिष्टो व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना ॥ शोफस्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।शोफः स्तब्धोलोहितस्तालुदेशेरक्ताज्ज्ञेयऽध्रुषोरुग्ज्वराढ्यः । कूर्म्मोत्सन्नोऽवेदनो शीघ्रजन्माऽरक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात् । पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्व्वुदं प्रोक्तलिङ्गम् ॥ दुष्टं मांसं श्लेष्मणा नीरुजञ्च तालुन्यस्थं मांससङ्घातमाहुः । नीरुक् स्थायी

कीलमात्रः कफात्स्याग्मेदोयुक्तात्पुप्पुटस्तालुः देशे॥ शोषोऽत्यर्थं दीर्य्यते चापि तालुःश्वा-सो वातात्तालुशोषः सपित्तात् । पित्तं कुर्य्यात्पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वद-न्ति ॥ कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूकमधिजिह्वी बलयो बलास एकवृन्दो वृन्दः शतघ्नी गिलायुर्गलविद्रधिर्गलौघः स्वरघ्नो मांस तानो विदारी चेति ॥ गलेऽनिलः पि-त्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम् । प्रदूष्य मांसं गलरोधिनोऽङ्कु-रान् सृजन्ति यान् साऽसुहरातुरोहिणी ॥ जिह्वां समन्तादुभृश वेदनाये मांसाङ्कुरा क-ण्ठनिरोधिनः स्युः ।तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रव गाढयुक्ताम्॥क्षिप्रोद्गमा प्रविदाहपाका तीव्रज्वरा पित्तनिमित्ततः स्यात् । स्रोतोनिरोधिन्यपि मन्दपाका गुर्व्वी स्थिरा सा कफसम्भवावै ॥ गम्भीरपाकाऽप्रतिवारवीर्य्या त्रिदोष लिङ्गा त्रयसम्भवा स्या-त्। स्फोटाचिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मिकेयम् ॥ कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः । खरः स्थिरः शस्त्रनिपातसाध्य स्तं कण्ठ-शालूकमिति ब्रुवन्ति ॥ जिह्वाग्ररूपः श्वयथु कफात्तु जिह्वाप्रबन्ध परिरक्तमिश्रः ॥ ज्ञे-यो ऽधिजिह्वः खलु रोग एष विवर्ज्जयेदागतपाकमेनं ॥ बलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य । तं सर्वथै वा प्रतिवारवीर्य्यं विवर्ज्जनीयं बलयं वदन्ति । गलेच शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् । मर्म्मच्छिदंदुस्तरमेतदाहुर्बलासस-ञ्ज्ञं निपुणा विकारम् ॥ वृत्तोन्नतो यःश्वयथु सदाहःकण्डून्वितोऽपाक्यमृदुर्गुरुश्च । ना-म्ना कवृन्दः परिकल्पितोऽसौ व्याधिर्ब्बलासक्षतजप्रसूतः ॥ समुन्नतं वृत्तममन्ददाहं तीव्र ज्वरं वृन्दमुदाहरन्ति । तच्चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनास्रजंतम् ॥ वर्त्ति र्घना कण्ठनिरोधिनी या चिताऽतिमात्रं पिशितप्ररूढैः ॥ नानारुजोच्छ्रायकरी त्रिदो-षाज्ज्ञेया शतघ्नीवशतघ्नीसाध्या ॥ ग्रन्थिर्गलेत्वामलकास्थिमात्रः स्थिरोऽल्परुक्स्यात्क-फरक्तमूर्त्तिः । संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रशाध्यस्तु गिलायुसंज्ञः ॥ सर्वं गलं व्याप्य समुत्थितो यः शोफो रुजो यत्र वसन्ति सर्वाः । स सर्वदोषोगलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य ॥ शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता । कफेन जा-तो रुधिरान्वितेन गले गलौघः परिकीर्त्यतेऽसौ । योऽतिप्रताम्यन् श्वसिति प्रसक्तं भि-न्नस्वरः शुष्कविमुक्तकण्ठाः । कफोपदिग्धेष्वनिलायनेषु ज्ञेयः सरोगः श्वसनात्स्वरघ्नः । प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण । स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्व्वकृतो विकारः॥ सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसं। पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥ सर्वसरास्तु वातपित्तकफशोणित-निमित्ताः ॥ स्फोटैः सतोदैर्व्वदनं समन्ताद्यस्याचितं सर्व्वसरः स वातात् ॥ रक्तैः सदा-हैस्तनुभिः सपीतैर्यस्याचितं वापि स पित्तकोपात् । कण्डूयुतैरल्परुजैः सवर्णैर्यस्याचितं च

चापि स वैकक्षेन। रक्तेन पित्तोदित एक एव कैश्चित्प्रदिष्टोमुखपाकसंज्ञः ॥ इति सुश्रुते आयुर्व्वेदशास्त्रे निदानस्थानं समाप्तम् ॥

# शारीरस्थानम् ॥

## ॥ प्रथमोऽध्यायः ॥

अथातो सर्व्वभूतचिन्ताशारीरं व्याख्यास्यामः।

सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमो लक्षणमष्टरूपमखिलस्य जगतः स्वभावहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्रइवोदकानां भावानाम् ॥ तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसोभूतादिरिति। तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते तद्यथा। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणीतराणि पञ्चकर्म्मेन्द्रियाणि। उभयात्मकं मनः ॥ भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्च तन्मात्राण्युत्पद्यन्ते तद्यथा। शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषातत्त्वचतुर्विंशतिर्व्याख्याता ॥ तत्र बुद्धिन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथा सङ्ख्यं वचनादानानन्दविसर्गविहरणानि। अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौप्रकृतयः शेषाः षोड़श विकाराः। स्वःस्वश्चैषां विषयोऽधिभूतम्। स्वयमध्यात्ममधिदैवतञ्च ॥ अथ बुद्धेर्ब्रह्मा। अहङ्कारस्येश्वरः मनसश्चन्द्रमाः। दिशः श्रोत्रस्य। त्वचो वायुः सूर्य्यश्चक्षुषोः। रसनस्यापः। पृथिवी घ्राणस्य। वचसोऽग्निः। हस्तयोरिन्द्रः। पादयोर्विष्णुः। पायोर्मित्रम्। प्रजापतिरूपस्थस्येति। तत्र सर्व्व एवाचेतन एष वर्गः पुरुषः पञ्चविंशतितमः स च कार्य्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति चीरादींश्चहेतूनुदाहरन्ति ॥ अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्यं व्याख्यास्यामः। तद्यथा। उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौच सर्व्वगताविति ॥ एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति। बहवतु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्म्मिणोऽप्रसवधर्म्मिणो मध्यस्थधर्म्मिणश्चेति ॥ तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्वएवैते विशेषाः सत्त्वरजतमोमया भवन्ति तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येकेभाषन्ते ॥ वैद्यकेतु ॥ स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा। परिणामञ्च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥

तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्। तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥ तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा। भूतेभ्योऽपि परं यस्मान्नास्ति चिन्ता चिकित्सिते यतोऽभिहितं तत्सम्भवद्रव्यसमूहोभूतादिरुक्तः ॥ भौतिकानिचेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः ॥ भवति चात्र ॥ इन्द्रियेणेन्द्रियार्थन्तुस्वं स्वं गृह्णाति मानवः। नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥ नचायुर्वेदशास्त्रेषूपदिश्यन्ते सर्व्वगताः क्षेत्रज्ञा नित्याश्च ॥ असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषस्यापकान् हेतूनुदाहरन्तिः। आयुर्वेदशास्त्रेष्वसर्वगता क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्माधर्मनिमित्तं तएतेऽनुमानग्राह्याः परम सूक्ष्माश्चेतनावन्त शाश्वता लोहितरेतसो सन्निपाते ष्वभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूत शरीरिसमवायः पुरुष इति। स एव कर्मपुरुषश्चिकित्साधिकृतः॥ तस्य सुखदुःखेच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणास्मृतिर्विज्ञानमध्यवसायोविषयोपलब्धिश्चगुणाः ॥ सात्विकास्तु आनृशंस्यं संविभागरुचिता तितिक्षा सत्यंधर्म आस्तिक्यं ज्ञानं बुद्धिर्मेधास्मृतिर्धृतिरनभिषङ्गश्च ॥ राजसास्तु दुःखबहुलताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भोमानो हर्षः कामः क्रोधश्च ॥ तामसास्तु विषादित्वं नास्तिक्यमधर्मशीलताबुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्मशीलतानिद्रालुत्वञ्चेति ॥ आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च ॥ वायव्यास्तुस्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्पन्दनं लघुता च ॥ तैजसास्तु रूपं रूपेन्द्रियं वर्णसन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्च ॥ आप्यास्तु रसो रसनेन्द्रियं सर्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च ॥ पार्थिवास्तु गन्धोगन्धेन्द्रियं सर्वं मूर्त्तिसमूहो गुरुता चेति ॥ तत्र सत्वबहुलमाकाशम्। रजोबहुलो वायुः। सत्वरजोबहुलोऽग्निः। सत्वतमोबहुला आपः। तमोबहुलापृथिवीति। श्लोकौ चात्र भवतः ॥ अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत्। स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते ॥ अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैवतु। क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥

## ॥ द्वितीयोऽध्यायः ॥

अथातः शुक्रशोणितशुद्धिर्नाम शारीरं व्याख्यास्यामः।

वातपित्तश्लेष्मकुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषरेतसः प्रजोत्पादने न समर्था भवन्ति तेषु वातवर्णवेदनं वातेन। श्लेष्मवर्णवेदनाश्लेष्मणा। शोणितवर्णवेदनं कुणपगन्ध्यनल्पं रक्तेन। ग्रन्थिभूत श्लेष्मवाताभ्यां। पूतिपूयनिभं पित्तश्लेष्मभ्यां। क्षीणं प्रागुक्तं पित्तमारुताभ्यां। मूत्रपुरीषगन्धि सन्निपातेनेति। तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतसः कृ-

च्छ्रसाध्याः ॥ मूत्रपुरीषरेतसस्त्वसाध्याः साध्यमन्यच्चेति ॥ आर्त्तवमपि त्रिभिर्दोषैः शो-
णितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति तदपि दोषवर्णवेदनादिभिर्वि-
ज्ञेयम् । तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यं साध्यमन्यद्भवति ॥ भव-
न्ति चात्र ॥ तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत् । क्रियाविशेषैर्मतिमांस्तथा
चोत्तरवस्तिभिः ॥ पाययेत नरं सर्पिर्भिषक् कुणपरेतसि । धातकीपुष्पखदिरदाडिमा-
र्ज्जुनसाधितं ॥ पाययेदथ वा सर्पिः शालसारादिसाधितं । ग्रन्थिभूते शठीसिद्धं पाला-
शे वापि भस्मनि ॥ परूषकवटादिभ्यां पूयप्रख्ये च साधितं । प्रागुक्तं वक्ष्यते यच्च तत्
कार्य्यं क्षीणरेतसि ॥ विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः । स्निग्धं वान्तं वि-
रिक्तञ्च निरूढ़मनुवासितम् ॥ योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना । विधिमुत्तरव-
स्त्यन्तं कुर्य्यादार्त्तवशुद्धये॥स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु । कुर्य्यात्कल्का-
न् पिचूंश्चापि पथ्यान्याचमनानि च ॥ ग्रन्थिभूते पिबेत्पाठां त्र्यूषणं वृक्षकाणि च । दुर्गन्धे
पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ॥ पिबेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च । शुक्रदोषहराणा-
ञ्च यथास्वमवचारणं ॥ दोषाणां शुद्धिकरणं शेषास्वप्यार्त्तवार्त्तिषु । अन्नं शालियवं म-
द्यं हितं मांसञ्च पित्तलं ॥ स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च । शुक्रमिच्छन्ति
केचित्तु तैलक्षौद्रनिभन्तथा ॥ शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमं । तदार्त्तवं प्र-
शंसन्ति यद्वासो न विरञ्जयेत् ॥ तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि । असृग्दरं विजा-
नीयादतोऽन्यद्रक्तलक्षणात् ॥ असृग्दरो भवेत सर्व्वः साङ्गमर्दः सवेदनः । तस्यातिवृ-
त्तौ दौर्बल्यं भ्रमो मूर्च्छा तमस्तृषा ॥ दाहः प्रलापः पाण्डुत्वं तन्द्रारोगाश्च वातजाः ।
तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक् ॥ रक्तपित्तविधानेन यथावत्समुपाचरेत् । दो-
षैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः ॥ तत्र मत्स्यकुलत्थाम्लतिलमाषसुरा हिताः ।
पानेमूत्र मुदश्विच्च दधिशुक्तञ्च भोजने॥क्षीणं प्रागीरितं रक्तं सलक्षचिकित्सितम्। तथा-
प्यत्र विधातव्यं विधानं नष्टरक्तवत् ॥ एवमदुष्टशुक्रः शुद्धार्त्तवा ॥ ऋतौ प्रथमदिवसा-
त्प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहस-
नकथनातिशब्दश्रवणावलेखनानिलायासान्परिहरेत् । किङ्कारणं । दिवा स्वपन्त्याः
स्वापशीलोऽञ्जनादन्धो रोदनाद्विकृतदृष्टिः स्नानानुलेपनाद्दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी-
नखापकर्त्तनात् कुनखी प्रधावनाच्चञ्चलो हसनाच्छ्यावदन्तौष्ठतालुजिह्वःप्रलापी चा-
तिकथनादतिशब्दश्रवणाद्बधिरोऽवलेखनात् खलतिर्मारुतायाससेवनादुन्मत्तो गर्भो भव-
तीत्येवमेतान् परिहरेत् ॥ दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं
चाहश्च भर्त्तुः संरक्षेत् ॥ ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससमलङ्कृतां कृतमङ्गलस्वस्ति-
वाचनां भर्त्तारं दर्शयेत् । तत् कस्य हेतोः ॥ पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।

त्मादृशं जनयेत्पुत्त्रं भर्त्तारं दर्शयेदतः ॥ ततो विधानं पुत्त्रीयमुपाध्यायः समाचरेत् । कर्मान्ते च क्रमं ह्येनमारभेत विचक्षणः ॥ ततोऽपराह्णे पुमान्मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिर्विश्वास्य विकल्प्यैवं चतुर्थ्यां षष्ठ्यां मष्टम्यां दशम्यां द्वादश्यां चोपेयादिति पुत्त्रकामः॥एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च।प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै ॥ अतःपरं पञ्चम्यां नवम्यामेकादश्यां च स्त्रीकामः ॥ त्रयोदशीप्रभृतयो निन्द्याः ॥ तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति । चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति । नच प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति यथा नद्यां प्रतिस्रोतःप्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यं । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् । अतःपरं मासादुपेयात् लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून् दद्याद्दक्षिणे नासापुटे पुत्त्रकामायै न च तान्निष्ठीवेत् ॥ ध्रुवञ्चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्व्वकः । ऋतुक्षेत्राम्बुबीजानां सामग्र्या दङ्कुरो यथा ॥ एवं जाता रूपवन्तो महासत्त्वाश्चिरायुषः । भवन्त्यृणस्य मोक्तारः सत्पुत्त्राः पुत्त्रिणे हिताः ॥ तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति पृथिवीधातुप्रायः कृष्णं पृथिव्याकाशधातुप्रायः कृष्णश्यामं तोयाकाशधातुप्रायो गौरश्यामं ॥ यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते ॥ तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति । तदेव रक्तानुगतं रक्ताक्षं पित्तानुगतं पिङ्गाक्षं श्लेष्मानुगतं शुक्लाक्षं वातानुगतं विकृताक्षमिति ॥ भवन्ति चात्र ॥

घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते । विसर्पत्यार्त्तवं नार्य्यास्तथा पुंसां समागमे ॥
वीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ । यमावित्यभिधीयेते धर्मेतरपुरःसरौ ॥
पित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयं ॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः । सयोनिशेफसोर्गन्धमाघ्राय लभते बलम्॥
स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते । कुम्भीकः स च विज्ञेयईर्ष्यकं शृणु चापरं ॥ दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स चविज्ञेयः षण्डकं शृणु पञ्चमं॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते । ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः ॥
ऋतौ पुरुषवद्वापि प्रवर्त्तताङ्गना यदि । तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रःषण्डसंज्ञितः ॥ अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः । हर्षात्स्फुटत्वमायान्ति ध्वजोच्छ्राय-

स्नतो भवेत् ।॥ आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ । स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥ यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन । मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥ ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत । आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणं । कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥ सर्पवृश्चिककुष्माण्डविकृताकृतयश्च ये । गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशं ॥ गर्भो वातप्रकोपेण दोहृदे चावमानिते । भवत्कुब्जः कुणिः पङ्गुर्मूको मिणिमिण एव ॥ मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः । वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात् ॥ मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च । वातमूत्रपुरीषाणि न गर्भस्थ करोति हि ॥ जरायुणा मुखेच्छन्ने कण्ठे च कफवेष्टिते । वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ निश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति । मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसम्भवान् ॥ सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ । तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः ॥ भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः । भवन्ति सत्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः ॥ कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे । अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान् ॥

## ॥ तृतीयोऽध्यायः ॥

अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ।

सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात्परस्परानुग्रहात्परस्परानुप्रवेशाच्च ॥ तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति । ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन । ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते ॥ क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते ॥ तत्र शुक्रबाहुल्यात्पुमानार्त्तवबाहुल्यात् स्त्री साम्यादुभयोर्नपुंसकमिति ॥ ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः ॥ अदृष्टार्त्तवोऽप्यस्तीत्येके भाषन्ते भवन्ति चात्र ॥ पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजां । नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजां ॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचं ॥ हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति । नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ॥ ऋतौ व्यतीते नार्य्यास्तु योनिं संव्रियते तथा मासेनोपचितं काले धमनीभ्यां तदार्त्तवं ॥ ईषत्कृष्णं विगन्धञ्च वायुर्योः-

निमुखं नयेत्। तद्वर्षादुद्गमकाले वर्त्तमानमसृक्पुनः॥ जरापक्तरोगाणां याति पञ्चाशतः क्षयं। युग्मेषुतुपुमान्प्रोक्तो दिवसेष्वन्यथाऽबला॥ पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियंव्रजेत्॥तत्र सद्योगृहीतगर्भाया लिङ्गानि श्रमोग्लानिः पिपासा सक्थि सदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः॥ स्तनयोःकृष्णमुखता रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः॥ अकामतश्छर्दयति गन्धादुद्विजते शुभात्। प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते॥ तदा प्रभृत्येवव्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कुटकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणंचाकाले वेगविधारणञ्च न सेवेत॥ दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते। स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ तत्र प्रथमे मासि कललं जायते। द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते यदि पिण्डः पुमान् स्त्रीचेत्पेशी नपुंसकञ्चेदर्बुदमिति। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्व्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति। चतुर्थे सर्वाङ्गप्रत्यङ्गविभाग प्रव्यक्ततरो भवति गर्भहृदयप्रव्यक्तभावाच्चेतनाधातुरभिव्यक्तो भवतिकस्मात्तत्स्थानत्वात्तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोतिद्विहृदयाञ्च नारीं दौहृदिनीमाचक्षते। दौहृदविमाननात्कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षंवा नारी सुतं जनयति। तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्।लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति॥ भवन्ति चात्र॥ इन्द्रियार्थं स्तुयान् यान्साभोक्तुमिच्छति गर्भिणी। गर्भाबाधभयात्तांस्तान्भिषगाहृत्य दापयेत्। सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम्॥ अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम्॥ येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना॥प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये॥राजसन्दर्शनेयस्या दौहृदं जायते स्त्रियाः। अर्थवन्तं महाभागं कुमारं सा प्रसूयते॥ दुकूलपट्टकौशेयभूषणादिषु दौहृदात्॥ अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते। आश्रमे संयतात्मानं धर्मशीलं प्रसूयते॥ देवताप्रतिमायान्तु प्रसूते पार्षदोपमम्। दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते॥ गोधमांसाऽशने पुत्रं सुषुप्सुं धारणात्मकम्। गवां मांसे च बलिनं सर्व्वक्लेशसहन्तथा॥ माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतं। वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत्सुतं॥ मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतं। सूमरोद्विग्नमनसं नित्यभीतं च तैत्तिरात्॥ अतोऽनुक्तेषु या नारी समभिध्याति दौहृदं। शरीराचारशीलैः सा समानंजनयिष्यति॥ कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्। यथा तथा दैवयोगाद्दौहृदं जनयेद्धृदि॥ पञ्चमे मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः। सप्तमे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः। अष्टमेऽस्थिरीभवत्योजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च ततो बलिं मां

सौहृदमस्मै दापयेत् । नवमदशमैकादशद्वादशानामन्यतमस्मिञ्जायते । अतोऽन्यथा विकारी भवति ॥ मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा साऽस्य मातुराहाररसवीर्य्यमभिवहति । तेनोपस्नेहेनास्याभिवृद्धिर्भवति । असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात्प्रभृतिसर्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति ॥ गर्भस्य हि सम्भवतः पूर्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वादेहेन्द्रियाणां ॥ हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात् ॥ नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः ॥ पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य । मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्वगात्रसम्भवस्य । तत्तु न सम्यक् ॥ सर्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च । तद्यथा । चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथग्दृश्यन्ते कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति । एतेनैव वंशाङ्कुरोऽपि व्याख्यातः । एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः । तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥ तत्र गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीरलक्षणानि व्याख्यास्यामः ॥ गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि ॥ मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि ॥ शरीरोपचयो वलं वर्णः स्थितिर्हानिश्च रसजानि इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि ॥ सत्त्वजान्युत्तरं वक्ष्यामः वीर्य्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि ॥ तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणाक्षिमहत्त्वञ्च पूर्वञ्च दक्षिणसक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्रमियं जनयिष्यतीति तद्विपर्य्यये कन्याम् ॥ यस्याः पार्श्वद्वयमुन्नतम्पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणं च तस्य नपुंसकमिति विद्यात् । यस्या मध्ये निम्नं द्रोणीभूतमुदरं सा युग्मं प्रसूयत इति ॥ भवन्ति चात्र

देवताब्राह्मणपराः शौचाचारहिते रताः । महागुणान् प्रसूयन्ते विपरीता तु निर्गुणान् ॥
अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते । अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः ॥ ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजाः ॥

## ॥ चतुर्थोऽध्यायः ॥

अथातो गर्भव्याकरणं नाम शारीरं व्याख्यास्यामः ।

अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ॥ तस्य खल्वे-

वस्थव्रुत्तस्यशुक्रशोणितस्याभिपच्यमानस्य चीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति ॥ तासां प्रथमाऽवभासिनीं नाम यासर्व्व वर्णानवभासयतिप च्चविधाञ्च छायां प्रकाशयति सा ब्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना द्वितीया लोहिता नामषोड़श- भागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना तृतीया श्वेता नाम द्वादशभागप्रमाणा- चर्मदलाजगल्लोमशकाधिष्ठाना चतुर्थी ताम्रानामाष्टभागप्रमाणा विविधकिलासकुष्ठा धिष्ठाना पञ्चमोवेदिनी नाम व्रीहिपञ्चभागप्रमाणाकुष्ठविसर्पाधिष्ठाना षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्व्वुदश्लीपदगलगण्डाधिष्ठाना सप्तमी मांसधरा नाम व्री- हिद्वयप्रमाणा भगन्दरविद्रध्यर्शोधिष्ठाना यदेतत्प्रमाणं निर्द्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटे सूक्ष्मांङ्गल्यादिषु । यतो वच्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्ये- दिति ॥ कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः ॥ भवतश्चात्र ॥ यथाहि सारः काष्ठेषुच्छिद्यमानेषु दृश्यते । तथा धातुर्हि मांसेषुच्छिद्यमानेषु दृश्यते ॥ स्नायुभि- श्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा । श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान्विदुः ॥ तासां प्रथमा मांसधरा नाम यस्यां मांसे सिरास्नायुधमनीस्रोतसां प्रताना भवन्ति ॥ भवति चात्र ॥ यथा विसमृणालानि विवर्द्धन्ते समन्ततः । भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः । द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतस्तस्यांशोणितं विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति ॥ भवति चात्र ॥ वृक्षाद्यथाभिप्रहतात् चीरिणः चीरमा- वहेत् । मांसादेवं चतात्चिप्रं शोणितं सम्प्रसिच्यते ॥ तृतीया मेदोधरा नाम मेदोहि सर्व्वभूतानामुदरस्थमणवस्थिषु च महत्सुच मज्जा भवति ॥ भवति चात्र ॥ स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः । अथेतरेषु सर्व्वेषु सरक्तं मेदउच्यते ॥ शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता । चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति ॥ स्नेहाभ्यक्ते यथात्वक्षे चक्रं साधु प्रवर्त्तते । सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणातथा पञ्चमी पुरीषधरा नाम यान्तः कोष्ठे मलमभिविभजते पक्वाशयस्था ॥ भवति चात्र॥ यकृत्समन्तात् कोष्ठञ्च यथान्त्राणि समाश्रिता । उण्डुकस्थं विभजते मलं मलधराकला ॥ षष्ठी पित्तधरा नाम या चतुर्व्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति ॥ भवतिचात्र ॥ अशितं खादितं पीतं लीढं कोष्ठगतं नृणां । तज्जीर्य्यति य- थाकालं शोषितं पित्ततेजसा ॥ सप्तमी शुक्रधरा नाम या सर्व्वप्राणिनां सर्वशरीरव्यापि- नी ॥ भवन्ति ॥ यथा पयसि सर्पिस्तु गुडश्चेक्षौ रसो यथा । शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥ द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः । मूत्रस्रोतः पथाच्छुक्रं पुरुषस्य प्रवर्त्तते ॥ कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा । स्त्रीषु व्यायच्छतश्चापि ह- र्षात्तत् सम्प्रवर्त्तते ॥ गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण तस्माद्

गृहीतगर्भाणामार्त्तवं नदृश्यते। ततस्तदधःप्रतिहतमूर्द्ध्वमागतमपरञ्चोपचीयमानमपरेत्य भिधीयते। शेषञ्चोर्द्धन्तरमागतं पयोधरावभिप्रतिपद्यते तस्मान्नभिख्यःपीनोन्नतपयोधरा भवन्ति॥ गर्भस्य यकृत्प्लीहानौ शोणितजौ। शोणितफेनप्रभवः पुप्फुसः शोणितकिट्टप्रभवउण्डुकः॥ असृजः श्लेष्मणश्चापियः प्रसादः परोमतः। तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति॥ ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः। उदरे पच्यमानानामाध्मानाद्रुक्ममसारवत्॥ कफशोणितमांसानां सारो जिह्वा प्रजायते। यथार्थमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा। मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात्॥ सिराणां च मृदुःपाकः स्नायूनाञ्च ततः खरः। आशय्याऽभ्यासयोगेन करोत्याशयसम्भवं॥ रक्तमेदः प्रसादाद्वृक्कौ मांसादृक्कफमेदःप्रसादाद्वृषणौ शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः। तस्याधोवामतःप्लीहा फुप्फुसश्च दक्षिणतो यकृत्क्लोम च॥ तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति॥ भवति चात्र॥ पुण्डरीकेण सदृशंहृदयं स्यादधोमुखं। जाग्रतस्तद्विकशति स्वपतश्च निमीलति॥ निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति सा स्वभावतएव सर्व्वप्राणिनोऽभिस्पृशति॥ तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रासम्भवत्यनवबोधिनी सा प्रलयकाले। तमोभूयिष्ठानामहःसु निशासुच भवति। रजोभूयिष्ठानामनिमित्तम्। सत्वभूयिष्ठानामर्द्धरात्रे। क्षीणश्लेष्मणामनिलबहुलानां मनःशरीराभितापवतांच नैव सा वैकारिकी भवति॥ भवन्ति चात्र॥ हृदयंचेतनास्थानमुक्तं सुश्रुत देहिनाम्। तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनां॥ निद्राहेतुस्तमः सत्वं बोधने हेतुरुच्यते। स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते॥ पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः। रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥ करणानां तु वैकल्ये तमसाभिप्रवर्द्धिते। अस्वपन्नपि भूतात्माप्रसुप्तइव चोच्यते॥ सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्॥ प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तावतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनांच मुहूर्त्तं दिवा स्वपनमप्रतिषिद्धं। रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवा स्वप्नः॥ विकृतिर्हि दिवास्वप्नोनाम तत्र स्वपतामधर्मः सर्व्वदोषप्रकोपश्च। तत्प्रकोपाच्च कासश्वास प्रतिश्याय शिरोगौरवाङ्गमर्दाऽरोचकज्वराग्निदौर्बल्यानि भवन्ति॥ रात्रावपि जागरितवतांवातपित्तनिमित्तास्तएवोपद्रवा भवन्ति॥ भवन्ति चात्र॥ तस्मान्न जागृयाद्रात्रौ दिवास्वप्नंच वर्जयेत्। ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत्॥ अरोगः सुमनाह्येवं बलवर्णान्वितो वृषः। नातिस्थूलकृशः श्रीमान्नरो जीवेत् समाः शतं॥ निद्रासात्मीकृता यैस्तु रात्रौच यदि वा दिवा। न तेषां स्वपतां

दोषो जाग्रतां वा विधीयते॥ निद्रानाशोऽनिलात्पित्तान्मनस्तापात्क्षयादपि । सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥ निद्रानाशेऽभ्यङ्गयोगो मूर्ध्नि तैलनिषेवणं । गात्रस्योद्वर्त्तनंचैव हितं संवाहनानि च ॥ शालिगोधूमपिष्टान्नभक्ष्यैरैक्षवसंस्कृतैः । भोजनं मधुरं स्निग्धं चीरमांसरसादिभिः ॥ रसैर्विलेशयानांच विष्किराणान्तथैव च ॥ द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि।शयनासनयानानि मनोज्ञानि मृदूनि च॥निद्रानाशेतु कुर्व्वीततथान्यान्यपि बुद्धिमान्।वमेन्निद्रातियोगे तुकुर्य्यात्संशोधनानि च।लङ्घनंरक्तमोक्षञ्च मनोव्याकुलनानि च।कफमेदोविषार्त्तानां रात्रौजागरणं-हितम्॥दिवास्वप्नश्चतृट्शूलहिक्काऽजीर्णातिसारिणां ।इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः॥निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ।पीत्वैकमनिलोच्छ्वास मुद्वेष्टन् विवृताननः॥यन्मुञ्चति स सनेत्रास्रं स जृम्भ इति संज्ञितः । योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ॥ क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः । सुखस्पर्शप्रसंज्ञित्वं दुःखद्वेषणलोलता ॥ शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् ॥ हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ वक्त्रं मधुरतातन्द्रा हृदयोद्वेष्टनं भ्रमः । नचान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् । आर्द्रचर्मावनद्धं हि यो गात्रमभिमन्यते । तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् । मूर्च्छापित्ततमःप्राया रजःपित्तानिलाद्भ्रमः । तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा॥ गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धिर्भवति ॥ भवन्ति चात्र ॥ तस्यान्तरेण नाभेस्तु ज्योतिः स्थानं ध्रुवं स्मृतम् । तदा धमति वातस्तु देहस्तेनास्य वर्द्धते ॥ ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः । ऊर्ध्वं तिर्य्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥ दृष्टिश्च रोमकूपाश्च न वर्द्धन्ते कदाचन;। ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥ शरीरे क्षीयमाणेऽपि वर्द्धते द्वाविमौ सदा । स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥ सप्त प्रकृतयो भवन्ति ॥ दोषैः पृथक् द्विशः समस्तैश्च ॥ शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः । प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥ तत्र जागरूकः शीतद्वेषो दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति ॥ अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनी ततः प्रलापी । द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः ॥ अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥ वातिकाश्चाजगोमायुशशाखूष्ट्रशुनान्तथा । गृध्रकाकखरादीनामनूकैः कीर्त्तिता नराः ॥ स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति ॥ मेधावी निपुणमतिर्विगृह्य-

वक्ता तेजस्वी समितिषु दुर्निवारवीर्य्यः। सुप्तः सन् कनकपलाशकर्णिकारान् सम्पश्येदपि च हुताशविद्युदुल्काः॥ न भयात् प्रणमेद्गतेष्वमृदुः प्रणतेष्वपि सान्त्वनदारुचिः। भवतीह सदा व्यथितास्य गतिः स भवेदिह पित्तकृतप्रकृतिः। भुजङ्गोलूकगन्धर्व्वयक्षमार्जारवानरैः व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः॥ दूर्व्वेन्दीवरनिस्त्रिंशार्द्रारिष्टशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढवैरश्च भवति॥ शुक्लाक्षः स्थिरकुटिलातिनीलकेशो लक्ष्मीवान् जलदमृदङ्गसिंहघोषः। सुप्तः सन् सकमलहंसचक्रवाकान् सम्पश्येदपि च जलाशयान् मनोज्ञान्॥ रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्वगुणोपपन्नः। क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः॥ दृढशास्त्रमतिः स्थिरमित्रधनः परिगण्य चिरात् प्रददातिबहु। परिनिश्चितवाक्यपदः सततं गुरुमानकरश्च भवेत् स सदा॥ ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः। तार्क्ष्यहंससमानकाः श्लेष्मप्रकृतयो नराः॥ द्वयोर्व्वा तिसृणां वापि प्रकृतीनान्तु लक्षणैः। ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत्॥ प्रकोपोवाऽन्यथाभावः क्षयो वा नोपजायते। प्रकृतीनां स्वभावेन जायते तु गतायुषः॥ विषजातो यथा कीटो न विषेण विपद्यते। तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुं॥ प्रकृतिमिह नराणां भौतिकीं केचिदाहुः। पवनदहनतोयैः कीर्त्तितास्तास्तुतिस्रः। स्थिरविपुलशरीरः पार्थिवश्चक्षमावान्। शुचिरथ चिरजीवी नाभसः खैर्महद्भिः॥ शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनं। प्रियातिथित्वमिज्याच ब्रह्मकायस्य लक्षणं॥ माहात्म्यं शौर्य्यमाज्ञा च सततं शास्त्रबुद्धिता। भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणं॥ शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता। प्रियवादित्वमित्येतद्वारुणं कायलक्षणं॥ मध्यस्थता सहिष्णुत्वमर्थस्यागमसञ्चयौ। महाप्रसवशक्तित्वं कौवेरं कातलक्षणं॥ गन्धमाल्यप्रियत्वञ्च नृत्यवादित्रकामिता। विहारशीलता चैव गान्धर्व्वं कायलक्षणं॥ प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमान् शुचिः। रागमोहभयद्वेषैर्वर्जितो याम्यसत्ववान्॥ जपव्रतब्रह्मचर्य्यहोमाध्ययनसेविनं। ज्ञानविज्ञानसम्पन्नमृषिसत्वं नरं विदुः॥ सप्तैते सात्विका कायाः राजसांस्तु निबोध मे। ऐश्वर्य्यवन्तं रौद्रञ्च शूरं चण्डमसूयकं॥ एकाशिनं चौदरिकमाशूरं सत्वमीदृशं। तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितन्तथा॥ विहाराचारचपलं सर्पसत्वं विदुर्नरं। प्रवृद्धकामसेवी चाप्यजस्राहार एव च॥ अमर्षणोऽनवस्थायी शाकुनं कायलक्षणं। एकान्तग्राहिता रौद्रमसूया धर्मबाह्यता॥ भृशमात्वं तमश्चापि राक्षसं कायलक्षणं। उच्छिष्टाहारता तैक्ष्ण्यं साहसप्रियता यथा॥ स्त्रीलोलुपत्वं नैर्लज्ज्यं पैशाचं कायलक्षणं। असंविभागमलसं दुःखशीलमसूयकं॥ लोलुपञ्चाप्यदातारं प्रेतसत्वं विदुर्नरं। षडेते राजसाः कायास्तामसांस्तु निबोध मे॥ दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता।

अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता। परस्पराभिमर्दश्च मत्स्यसत्त्वस्य लक्षणं॥ एकस्थानरतिर्नित्यमाहारे केवले रतः। वानस्पत्यो नरः सत्त्वधर्मकामार्थवर्जितः॥ इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा। कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत्॥ महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः। प्रोक्ताः लक्षणतः सम्यग् भिषक् ताश्च विभावयेत्॥

## पञ्चमोऽध्यायः॥

अथातः शरीरसंख्याव्याकरणं शारीरं व्याख्यास्यामः।

शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते। तञ्च चेतनावस्थितं वायुर्विभजति तेज एनं पचति। आपः क्लेदयन्ति पृथिवी संहन्त्याकाशं विवर्द्धयति। एवं विवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते तच्च षडङ्गं शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिर इति॥ अतःपरं प्रत्यङ्गानि वक्ष्यन्ते। मस्तकोदरपृष्ठनाभिललाटनासाचिबुकबस्तिग्रीवा इत्येता एकैकाः। कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे विंशतिरङ्गुलयः। स्रोतांसि च वक्ष्यमाणानि। एष प्रत्यङ्गविभाग उक्तः॥ तस्य पुनः संख्यानं। त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डराजालानि कूर्चा रज्जवः सेवन्यः संघाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्माणि सिराधमन्यो योगवहानि स्रोतांसि च॥ त्वचः सप्त। कलाः सप्त आशयाः सप्त धातवः सप्त सप्त सिराशतानि पञ्च पेशीशतानि नव स्नायुशतानि त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धिशते। सप्तोत्तरं मर्मशतं। चतुर्विंशतिर्धमन्यः। त्रयो दोषास्त्रयो मलाः। नव स्रोतांसीति समासः॥ विस्तारोऽत ऊर्द्ध्वं। त्वचोऽभिहिताः कलाधातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयं वृक्कौ च॥ आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम इति॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणामर्द्धव्यामहीनानि॥ श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहञ्च॥ षोड़श कण्डराः। तासाञ्चतस्रः पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु। तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहाः। ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां मेढ्रं श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां बिम्बः। मूर्द्धोरुवक्षोऽक्षपिण्डादीनाञ्च॥ मांससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि॥ तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति येर्गवा-

चितमिदं शरीरम् ॥ षट् कूर्च्चास्ते हस्तपादग्रीवामेढ्रेषु । हस्तयोर्द्वौ ग्रीवामेढ्रयोरेकैकः ॥ महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे ॥ सप्त सेवन्यः । शिरसि विभक्ताः पञ्च जिह्वाशेफसोरेकैका ताः परिहर्त्तव्याः शस्त्रेण ॥ चतुर्दशास्थ्नां सङ्घाताः । तेषां त्रयो गुल्फ जानुवङ्क्षणेषु । एतेनेतरसक्थिबाहू व्याख्यातौ । त्रिकशिरसोरेकैकः ॥ चतुर्दशैव सीमन्ताः ते चास्थिसङ्घातवद्गणनीया यतस्तैर्युक्ता अस्थिसङ्घाताः । येषु क्ताः सङ्घाताः तास्तु खल्वष्टादशैकेषां ॥ त्रीणि सषष्ठीन्यस्थिशतानि वेदवादिनो भाषन्ते । शल्यतन्त्रे तु त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु । सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरोरस्सु । ग्रीवां प्रत्यूर्द्धं त्रिषष्टिः । एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते ॥ एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणितानि पञ्चदश । तलकूर्च्च गुल्फसंश्रितानि दश । पार्ष्ण्यामेकं । जङ्घायां द्वे जानुन्येकं । एकमूराविति । त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ ॥ श्रोण्यां पञ्च तेषां गुदभगनितम्बेषु चत्वारि त्रिकसंश्रितमेकं । पार्श्वे षट्त्रिंशदेवमेकस्मिन् द्वितीयेऽप्येवम् । पृष्ठे त्रिंशत् । अष्टावुरसि । द्वे अक्षकसंज्ञे । ग्रीवायां नवकम् । कण्ठनाड्यां चत्वारि । द्वे हन्वोः । दन्ता द्वात्रिंशत् । नासायां त्रीणि । एकं तालुनि । गण्डकर्णशङ्खेष्वेकैकम् । षट् शिरसि ॥ एतानि पञ्चविधानि भवन्ति । तद्यथा । कपालरुचकतरुणवलयनलकसंज्ञानि । तेषां जानुनितम्बांसगण्डतालुशङ्खशिरस्सु कपालानि दशनास्तु रुचकानि घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि । पाणिपादपार्श्वपृष्ठोदरोरस्सु वलयानि । शेषाणि नलकसंज्ञानि ॥ भवन्ति चात्र ॥ अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः । अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवं । तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणां । अस्थीनि न विनश्यन्ति साराण्येतानि देहिनां ॥ मांसान्यत्र निबद्धानि सिराभि स्नायुभिस्तथा । अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥ सन्धयस्तु द्विविधाश्चेष्टावन्त स्थिराश्च ॥ शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः । शेषास्तु सन्धयः सर्व्वे विज्ञेया हि स्थिरा बुधैः ॥ सङ्ख्यातस्तु दशोत्तरे द्वे शते तेषां शाखास्वष्टषष्टिरेकोनषष्टिः कोष्ठे ग्रीवाम्प्रत्यूर्द्ध्वं त्र्यशीतिः ॥ एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे ते चतुर्दश । जानुगुल्फवङ्क्षणेष्वेकैकः । एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ त्रयः कटीकपालेषु । चतुर्विंशतिः पृष्ठवंशे तावन्त एव पार्श्वयोः । उरस्यष्टौ तावन्त एव ग्रीवायां । त्रय कण्ठे । नाडीषु हृदयक्लोमनिबद्धास्त्वष्टादश । दन्तपरिमाणा दन्तमूलेषु । एकः काकलके नासायाञ्च । द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ । गण्डकर्णशंखेष्वेकैकः । द्वौ हनुसन्धी । द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च । पञ्च शिरःकपालेषु । एको मूर्ध्नि ॥ त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसेवनी वायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगु-

ल्फजानुकूर्परेषु कोराः सन्धयः । कक्षावङ्क्षणदशनेषूदूखलाः । अंसपीठगुदभगनितम्बेषु सामुद्गाः । ग्रीवा पृष्ठवंशयोः प्रतराः । शिरःकटीकपालेषु तुन्नसेवनी । हन्वोरुभयतस्तु वायसतुण्डाः । कण्ठहृदयनेत्रक्लोमनाडीषु मण्डला । श्रोत्र शृङ्गाटकेषु शङ्खावर्त्ताः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः । पेशीस्नायुसिराणान्तु सन्धिसंख्या न विद्यते ॥ नव स्नायुशतानि तासां शाखासु षट् शतानि । द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः । एकैकस्यान्तु पादाङ्गुल्यां षट् निचितास्तास्त्रिंशत् । तावत्य एव तलकूर्च्चगुल्फेषु । तावत्य एष जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे । शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरहक्थिबाहू च व्याख्यातौ ॥ षष्टिः कव्यां । अशीतिः पृष्ठे । पार्श्वयोः षष्टिः । उरसि त्रिंशत् । षट्त्रिंशद्ग्रीवायां । मूर्ध्नि चतुस्त्रिंशत् । एवं नव स्नायुशतानि व्याख्यातानि ॥ भवन्ति चात्र ॥ स्नायूश्चतुर्विधा विद्यात्तास्तु सर्व्वा निबोध मे । प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ । वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह । आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु । पार्श्वोरसि तथा पृष्टे पृथुलाश्च शिरस्यथ ॥ नौर्यथा फलकास्तीर्णा बन्धनैर्व्वहुभिर्युता । भारक्षमा भवेदप्सु न्टयुक्ता सुसमाहिता ॥ एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्ते न भारसहानराः ॥ नह्यस्थीनि नवा पेश्यो न सिरा नच सन्धयः । व्यापादितास्तथा हन्त्युर्यथा स्नायुः शरीरिणं ॥ यः स्नायुः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा । सगूढंशल्यमाहर्त्तुं देहाच्छक्नोति देहिनां ॥ पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु । कोष्ठे षटषष्टिः । ग्रीवां प्रत्यूर्द्ध्वञ्चतुस्त्रिंशत् ॥ एकैकस्यान्तुपादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश । दशप्रपदे । पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव । दशगुल्फतलयोः । गुल्फजान्वन्तरे विंशति । पञ्च जानुनि । विंशतिरूरौ । दश वङ्क्षणे । शतमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ तिस्रः पायौ । एका मेढे । सेवन्यां चापरा । द्वे वृषणयोः स्फिचोः पञ्च प्रञ्च । द्वे वस्ति शिरसि । पञ्चोदरे । नाभ्यामेका । पृष्ठोदुर्ध्वसंनिविष्टाः पञ्च पञ्च दीर्घाः । षट्पार्श्वयोः । दश वक्षसि । अक्षकांसौ प्रति समन्तात् सप्त । द्वे हृदयामाशयोः । षट् यकृत्प्लीहोण्डकेषु । ग्रीवायाञ्चतस्रः । अष्टौ हन्वोः । एकैका काकलगलयोः । द्वे तालुनि । एका जिह्वायां । ओष्ठयोर्द्वे । घोणायां द्वे । द्वे नेत्रयोः । गण्डयोश्चतस्रः कर्णयोर्द्वे । चतस्रो ललाटे । एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥ सिरस्नायूस्थिपर्व्वाणि सन्धयश्च शरीरिणां । पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥ स्त्रीणान्तु विंशतिरधिका । दश स्तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धिः । अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये चप्रवृत्ते

गर्भच्छिद्रं संश्रितास्तिस्रः । शङ्खनाभ्याकृतयस्तिस्र एव । पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति ॥ तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥ भवति चात्र ॥ पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः । स्त्रीणामा- वृत्य तिष्ठन्ति फलमन्तर्गतं हिताः ॥ मर्मसिराधमनीस्रोतसामन्यत्र प्रविभागः ॥ शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः । स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥ त्वक्पर्यन्तस्य देहस्य योयमङ्गविनिश्चयः । शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित्॥ तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता । शोधयित्वा मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः ॥ प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत् । समासतस्तदुभयं भूयो ज्ञानविवर्द्धनं॥ तस्मात्समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशदेशे कोथयेत् सम्यक्प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरवालवेणुवल्कलकूर्चानामन्यतमेन शनैःशनैरवघर्षयंस्त्वगादीन् सर्व्वानेववाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ श्लोकौ चात्र भवतः ॥ न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः । दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥ शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः । दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत्क्रियाः ॥

## ॥ षष्ठोऽध्यायः ॥

अथातः प्रत्येकमर्म्मनिर्देशं शारीरं व्याख्यास्यामः ।

सप्तोत्तरं मर्मशतं ॥ तानि मर्माणि पञ्चात्मकानि । तद्यथा मांसमर्माणि । सिरामर्माणि । स्नायुमर्माणि । अस्थिमर्माणि । सन्धिमर्माणि चेति ॥ न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्माणि भवन्ति यस्मान्नोपलभ्यन्ते ॥ तत्रैकादश मांसमर्माणि । एकचत्वारिंशत् सिरामर्माणि । सप्तविंशतिः स्नायुमर्माणि । अष्टावस्थिमर्माणि । विंशतिः सन्धिमर्माणि । तदेतत् सप्तोत्तरं मर्म्मशतम् ॥ तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहूच व्याख्यातौ । उदरोरसोर्द्वादश चतुर्दश पृष्ठे । ग्रीवायां प्रत्यूर्द्ध्वं सप्तविंशत् ॥ तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्युर्व्वीलोहिताक्षाणि विटपञ्चेति । एतेनेतरं सक्थि व्याख्यातम् ॥ उदरसोस्तु ॥ गुदवस्ति नाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौचेति ॥ पृष्ठमर्माणितु कटीक-

तरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति॥बाहुमर्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रवस्तिकूर्पराण्युर्व्वीलोहिताक्षाणि कक्षधरश्चेति । एतेनेतरो बाहुर्व्याख्यातः ॥ जत्रूर्द्ध्वं मर्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे क्रकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेकास्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति ॥ तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्माणि ॥ नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतिलोहिताक्षोर्व्व्यः सिरामर्माणि॥ आणिविटपकक्षधरकूर्चकूर्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्माणि ॥ कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि ॥ जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तक्रकाटिकाश्चेति सन्धिमर्माणि ॥ तान्येतानि पञ्चविकल्पानि मर्माणि भवन्ति । तद्यथा । सद्यः प्राणहराणि कालान्तरप्राणहराणि विशल्यघ्नानि वैकल्यकराणि रुजाकराणीति ॥ तत्र सद्यः प्राणहराण्येकोनविंशतिः । कालान्तरप्राणहराणि त्रयस्त्रिंशत् । त्रीणि विशल्यघ्नानि । चतुश्चत्वारिंशद्वैकल्यकराणि । अष्टौ रुजाकराणीति ॥ भवन्ति चात्र ॥ शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरो गुदं । हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥ वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः । कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥ नितम्बाविति चैतानि कालान्तरहराणि तु । उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत् ॥ लोहिताक्षाणि जान्वूर्व्वीकूर्चा विटपकूर्पराः । कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा । वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥ गुल्फौ द्वौ मणिबन्धौ द्वे द्वे द्वे कूर्चशिरांसि च । रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥ क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेन च ॥ मर्माणि नाम मांससिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति तस्मान्मर्मस्वभिहतास्तांस्तान् भावानापद्यन्ते ॥ तत्र सद्यः प्राणहराण्याग्नेयान्यग्निगुणेष्वाशुक्षीणेषु क्षपयन्ति ॥ कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति ॥ विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धोयावदन्तर्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुर्निष्क्रामति तस्मात्सशल्यो जीवत्युद्धृतशल्यो म्रियते ।वैकल्यकराणि सौम्यानि सोमोहि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति ॥ रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ । पाञ्चभौतिकोञ्च रुजामाहुरेके ॥ केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानाञ्चसमवायात्सद्यप्राणहराणि । एक हीनानामल्पानां वा कालान्तर प्राणहराणि द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि । एकस्मिन्नेव रुजाकराणीति ॥ यतश्चैवमतोऽस्थि मर्मस्वप्यभिहतेषु शोणि-

तागमनं भवति ॥ चतुर्विधा यास्तु शिराः शरीरे प्रायेणता मर्मसु सन्निविष्टाः । स्नायु-
स्थिमांसानि तथैव शन्धीन्सन्तर्प्य देहं प्रतिपालयन्ति ॥ ततः क्षतें मर्मणि ताः प्रवृद्धः
समन्ततो वायुरभिस्तृणोति । विवद्ध मानस्तु स मातरिश्वा रुजः सुतीव्राः प्रतनोति का-
ये ॥ रुजाभिभूतन्तु पुनः शरीरं प्रलीयते नश्यति चास्य संज्ञा । अतोहि शल्यं विनिहर्त्तु-
मिच्छुर्मर्माणि यत्नेन परीक्ष्य कर्षेत् ॥ एतेन शेषं व्याख्यातं ॥ तत्र सद्यःप्राणहरमन्ते
विद्धं कालान्तरेण मारयति । कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति । विशल्य
प्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाश्च करोति । रुजाकरमतीव्रवेदनं भवति ॥
तत्र सद्यः प्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति । कालान्तरप्राणहराणि पक्षान्मासा-
द्वा । तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति । विशल्यप्राणहराणि वैकल्यकराणि च
कदाचिदत्यभिहतानि मारयन्ति ॥ अतऊर्द्ध्वं प्रत्येकशो मर्मस्थानान्यनुव्याख्यास्यामः ॥
तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्येक्षिप्र नाम मर्म तत्र विद्धस्याक्षेपकेण मरणं ॥ मध्यमाङ्गुलीमनु-
पूर्व्वेण मध्ये पादतलस्य तल हृदयं नाम तत्रापि रुजाभिर्मरणं । क्षिप्रस्योपरिष्टादुभयतः
कूर्चो नाम तत्र पादस्य भ्रमणवेपने भवतः । गुल्फसन्धेरधउभयतः कूर्चशिरो नाम तत्र
रुजाशोफौ । पदजङ्घयो सन्धाने गुल्फो नाम तत्र रुजः स्तब्धपादता खञ्जता वा ॥ पा-
र्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षये मरणम् । जङ्घोर्व्वोः सन्धाने जानुना
म तत्र खञ्जता । जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम तत्र शोफाभिवृद्धिः स्तब्धसक्-
थिता च । ऊरुमध्ये ऊर्व्वीनाम तत्र शोणितक्षयात् सक्थिशोषः। ऊर्व्याऊर्द्ध्वमधोवङ्क्ष-
णसन्धेरूरुमूले लोहिताक्षं नाम तत्र लोहितक्षयेण पक्षाघातः । वङ्क्षणवृषणयोरन्त
विटपं नाम तत्र षाण्ढ्यमल्पशुक्रता वा भवति । एवमेतान्येकादश सक्थिमर्माणि व्या-
ख्यातानि । एतेनेतरसक्थि वाहू च व्याख्यातौ ॥ विशेषस्तु यानि सक्थ्नि गुल्फजानुवि-
टपानि तानि बाहौ मणिबन्धकूर्परकक्षधराणि यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं व
क्षः कक्षयोर्मध्ये कक्षधरं तस्मिन्विद्धे त एवोपद्रवाः । विशेषस्तु मणिबन्धे कुण्ठता । कू-
र्पराख्ये कुणिः । कक्षधरे पक्षाघातः ॥ एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्माणि व्या
ख्यातानि ॥ अत ऊर्द्ध्वमुदरोरसोर्मर्मस्थानान्यनुव्याख्यास्यामः । तत्र वातवर्चोनिरसनं
स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म तत्र सद्योमरणं ॥ अल्पमांसशोणितोऽभ्यन्तरतः कट्या
मूत्राशयो वस्तिर्नाम तत्रापि सद्योमरणमश्मरीव्रणादृते तत्राप्युभयतो भिन्ने न जीवत्ये
कतो भिन्ने मूत्रस्रावी व्रणो भवति स तु यत्नेनोपक्रान्तोरोहति ॥ पक्वामाशयोर्मध्ये
सिराप्रभवानाभिर्नाम तत्रापि सद्य एव मरणं । स्तनयोर्मध्यमधिष्ठायोरस्यामाश-
यद्वारं सत्वरजस्तमसामधिष्ठानं हृदयं नाम तत्र सद्य एव मरणं । स्तनयोरध-
स्ताद्द्व्यङ्गुलमुभयतः स्तनमूले नाममर्मणी तत्र कफपूर्णकोष्टतया कास श्वासाभ्या-

म्रियते। स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम तत्र रक्तेन पूयभावं गतेन मरणं उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मरणं। एवमेतान्युदरोरसो र्द्वादश मर्माणि व्याख्यातानि ॥ अत ऊर्द्ध्वं पृष्ठमर्माण्यनुव्याख्यास्यामः ॥ तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते ॥ पार्श्वजघनवहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्मणी तत्र स्पर्शाज्ञानमधः काये चेष्टोपघातश्च ॥ श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्ब्बल्याच्च मरणं ॥ अधः पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते ॥ स्तनमूलादुभयतः पृष्ठवंशस्य वृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते ॥ पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा ॥ बाहुमूर्द्धग्रीवामध्येऽसंपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता । एवमेतानि चतुर्दश पृष्ठमर्माणि व्याख्यातानि ॥ अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्यामः ॥ तत्र कण्ठनाडीमुभयतश्चस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन तत्र मूकता स्वरवैकृतमरसग्राहिता च ॥ ग्रीवायामुभयतश्चतस्रः। सिरामातृकास्तत्र सद्यो मरणं॥ शिरोग्रीवयोः सन्धाने कृकाटिके नाम तत्र चलमूर्द्धता ॥ कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम तत्र बाधिर्य्यं ॥ घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम तत्र गन्धाज्ञानं ॥ भ्रूपुच्छान्तयोरधोऽक्ष्णोर्वाह्यतोऽपाङ्गौ नाम तत्रान्ध्यं दृष्ट्युपघातो वा ॥ भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम तत्रान्ध्यं दृष्ट्युपघातश्च ॥ भ्रुवोपुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम तत्र सद्योमरणं ॥ शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम तत्र सशल्यो जीवति पाकात् पतितशल्यो वा नोद्धृतशल्यः ॥ भ्रुवोर्मध्ये स्थपनी नाम तत्रोत्क्षेपवत् ॥ पञ्चसन्धयः शिरसि विभक्ताः सीमन्ता नाम तत्रोन्मादभयचित्तनाशैर्मरणं। घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनं सिराणां मध्ये सिरासन्निपातः शृङ्गाटकानि तानि चत्वारि मर्माणि तत्रापि सद्योमरणं । मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्तोऽधिपतिस्तत्रापि सद्योमरणं ॥ एवमेतानि सप्तत्रिंशदूर्द्ध्वजत्रुगतानिमर्माणि व्याख्यातानि ॥ भवन्ति चात्र ॥ ऊर्व्वीः शिरंसि विटपे च सकक्षपार्श्वे एकैकमङ्गुलमिता स्तनपूर्व्वमूलं । विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं त्रीण्येव जानु सपरं सहकूर्प्पराभ्याम्। हृद्बस्तिकूर्च्चगुदनाभि वदन्तिमूर्ध्निचत्वारि पञ्च च गले दश यानि च द्वे । तानि स्वपाणितलकुञ्चितसंमितानि शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धं । एतत्प्रमाणमभिवीक्ष्यवदन्ति तज्ज्ञाः शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म ।

पार्श्वाभिघातितमपीह निघ्नन्ति मर्म तस्माद्धि मर्मसदनं परिवर्जनीयम् । छिन्नेषु पाणि चरणेषु सिरा नराणां सङ्कोचमीयुरसृगल्पमतो निरेति । प्राप्यामितव्यसनमुग्रमतो मनुष्याः संछिन्नशाखा तरुवन्निधनं न यान्ति । क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं गच्छत्यतीव पवनश्च रुजं करोति । एवं विनाशमुपयान्ति हि तत्र विद्धा वृक्षा इवायुधविघातनिकृत्तमूलाः । तस्मात्तयोरभिहतस्य तु पाणिपादं छेत्तव्यमाशु मणिबन्धनगुल्फदेशे । मर्माणि शल्यविषयार्धमुदाहरन्ति यस्माच्च मर्मसु हता न भवन्ति सद्यः । जीवन्ति तत्र यदि वैद्यगुणेन केचित्ते प्राप्नुवन्ति विकलत्वमसंशयं हि । सम्भिन्नजर्जरितकोष्ठशिरः कपालाः जीवन्ति शस्त्रनिहतैश्च शरीरदेशैः । छिन्नैश्च सक्थिभुजपादकरैरशेषैर्येषां न मर्मपतिता विविधाः प्रहाराः । सोममारुततेजांसि रजः सत्वतमांसि च ॥ मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥ मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः । इन्द्रियार्थेष्वसम्प्राप्तिर्मनोबुद्धिविपर्ययः ॥ रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते । हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ॥ ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति । हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥ शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् । विशल्यघ्नेषु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥ रुजाकराणि मर्माणि क्षतानि विविधा रुजः । कुर्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥ छेदभेदाभिघातेभ्यो दहनाद्दारणादपि । उपघातं विजानीयान्मर्मणां तुल्यलक्षणं ॥ सर्माभिघातस्तु न कश्चिदस्ति योऽल्पात्ययो वापि निरत्ययो वा । प्रायेण मर्मस्वभिताडितास्तु वैकल्यमृच्छन्त्यथ वा म्रियन्ते । मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम् । प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरपि साध्यमानाः ॥

## सप्तमोऽध्यायः ॥

अथातः सिरावर्णनविभक्तिनाम शारीरं व्याख्यास्यामः ।

सप्त सिराशतानि भवन्ति । याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः ॥ द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रसरन्त्यूर्ध्वमधस्तिर्यक् च ॥ भवतश्चात्र यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणां । नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥ नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता । सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ तासां मूलसिराश्चत्वारिंशत्तासां वातवाहिन्यो दश पित्तवाहिन्यो दश कफवाहिन्यो दशदश रक्तवाहिन्यः तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति तावत्य एव पित्तवाहिन्यः पित्तस्थाने कफवाहिन्यश्च कफस्थाने रक्तवाहिन्यश्च यकृत्प्लीह्नोः एवमेतानि सप्त सिराशतानि ॥ तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशति

एतेनेतरसक्थिबाहू च व्याख्यातौ विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ द्वे द्वे पार्श्वयोः षट् पृष्ठे तावत्य एव चोदरे दश वक्षसि ॥ एकचत्वारिंशज्जत्रुण ऊर्द्ध्वं तासां चतुर्दशग्रीवायां । कर्णयोश्चतस्रः । नव जिह्वायां ! षट् नासिकायां। अष्टौ नेत्रयोः । एवमेतत्पञ्च सप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातं। एष एव विभागः शेषाणामपि ॥ विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश कर्णयोर्द्वे । एवं रक्तवहाः कफवहाश्च । एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि ॥ भवन्ति चात्र ॥ क्रियाणामप्रतीघातममोहं बुद्धिकर्मणां । करोत्यन्यान्गुणांश्चापि स्वाःसिराः पवनश्चरन् ॥ यदा तु कुपितो वायुः स्वाःसिराःप्रतिपद्यते । तदास्य विविधा रोगा यायन्ते वातसम्भवा॥भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगतां । संसर्पत्स्वाःसिराःपित्तं कुर्य्याच्चान्यान्गुणानपि ॥ यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः । तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥ स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णतां । करोत्यन्यान्गुणांश्चापि बलासः स्वाःसिराश्चरन् ॥ यदा तु कुपितो श्लेष्मा स्वाः सिराः प्रतिपद्यते । तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥ धातूनां पूरणं वर्णंस्पर्शज्ञानमसंशयं । स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान्गुणानपि ॥ यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः । तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥ नहि वातं सिराः काश्चिन्न पित्तं केवलं तथा । श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः ॥ प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावतां ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः॥तत्रारुणा वातवहा पूर्य्यन्ते वायुना सिराः ।पित्तादुष्णाश्चनीलाश्च शीतागौर्य्यःस्थिराःकफात्॥असृग्वहास्तु रोहिण्यःसिरा नात्युष्णशीतलाः॥अतऊर्द्ध्वं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक्।वैकल्यं मरणञ्चापि व्यधात्तासां ध्रुवं भवेत् । सिराशतानिचत्वारिविद्याच्छाखासुबुद्धिमान् ॥ षट्त्रिंशच्चशतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि । शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव तु ॥ पञ्चाशज्जत्रु णश्चोर्द्ध्वमवेध्याः परिकीर्त्तिताः ॥ तत्र शिराशतमेकस्मिन सक्थ्नि भवति तासां जालधरात्वेका तिस्रश्चाभ्यन्तरास्तत्रोर्व्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैकैतास्ववेध्या एतेनेतर सक्थिबाहू च व्याख्यातावेवमशस्त्रकृत्या षोडश शाखासु ॥ द्वात्रिंशत् श्रोण्यां तासामष्टावशस्त्रकृत्या द्वे द्वे विटपयोः कटीकतरुणयोश्च । अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्ध्वगां परिहरेत् पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासामूर्द्ध्वगामिन्यो द्वे द्वे परिहरेद्बृहतीसिरे। तावत्य एवोदरे तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत् । चत्वारिंशद्वक्षसि तासां चतुर्दशाशस्त्रकृत्या हृदये द्वे द्वे द्वे स्तनमूले स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ । एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति ॥ चतुःषष्टिसिराशतं जत्रुण ऊर्द्ध्वं भवति तत्र षट्पञ्चाशच्छिरोधरायां तासामष्टौ चतस्रश्च मर्मसं-

ज्ञाः परिहरेदुद्वे ककाटिकयोर्द्वे विधुरयोः। एवं ग्रीवायां षोडशाव्यध्याः॥ हन्वोरुभयतोऽष्टावष्टौ तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्॥ षट्त्रिंशज्जिह्वाया तासामधः षोडशाशस्त्रकृत्यारसवहे द्वे वाग्वहे च द्वे। द्विर्द्वादशनासायां तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकं मृदावुद्देशे॥ अष्टात्रिंशदुभयोर्नेत्रयोस्तासामेकैकाम-पाङ्गयोः परिहरेत्॥ कर्णयोर्दश तासां शब्दवाहिनीनामेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिस्तासां केशान्तानुगताश्चतस्रः॥ आवर्त्तयोरेकैका स्थपन्याश्चैका परिहर्त्तव्या। शङ्खयोर्दशतासां शङ्खसन्धिगतामेकैकां परिहरेत्॥ द्वादश मूर्ध्नि तासामुत्क्षेपयोर्द्वे परिहरेत्॥ सीमन्तेष्वेकैकामेकामधिपताविति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्ध्वमिति॥ भवति चात्र॥ व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः। प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥

# अष्टमोऽध्यायः

## अथातः सिराव्यधविधिं शारीरं व्याख्यास्यामः

बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तस्त्रीमद्याध्वकर्षितमत्तवान्तविरिक्तास्थापितानुवासितजागरितक्लीवकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडितानाञ्च सिरां न विध्येद्याश्चाव्याध्या व्यध्याश्चादृष्टाश्चायन्त्रितायश्चानुत्थिता इति॥ शोणितावसेकसाध्याश्च विकाराः प्रागभिहितास्तेषु चापाकेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत्।प्रतिषिद्धानामपि च विषोपसर्गेष्वात्ययिकेषु सिराव्यधनमप्रतिषिद्धम्॥तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वायथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कलतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत्॥नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।सिराणां व्यधनं कार्य्यमरोगे वा कदाचन॥तत्रव्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परे सन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टीमन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामूले परि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्योऽब्रवाद्दक्षिणहस्तेन शिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रणमावेष्टयेत्यस्यैकृत्स्नावणार्थंयन्त्रं पृष्ठमध्ये च पीड़येति कम्पिपुरुषश्च वायुपूर्णमुखं स्थापयेदेष उत्तमाङ्गगतानामन्तर्मुखवर्ज्यानां सिराणां व्यधने यन्त्रणविधिः॥ तत्र पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधःशाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं व्य

ध्यप्रदेशस्योपरि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्धा पादसिरां विध्येत्। अथोपरिष्टा-
द्धस्तौ गूढाङ्गुष्ठकृतमुष्टीसम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्धा ह-
स्तसिरां विध्येत्। गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परःस्यात्। श्रोणीपृष्ठस्कन्धे पून्ना-
मितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः। प्रसारि-
तोरस्कस्योन्नमितशिरस्कस्य विस्फूर्जितदेहस्य। बाहुभ्यामवलम्बमानदेहस्य पार्श्वयोः।
अवनामितमेढ्रस्य मेढ्रे। उन्नामितविदष्टजिह्वाग्रस्याधोजिह्वायाम्। अतिव्यात्ताननस्य ता-
लुनि दन्तमूलेषु च। एवं यन्त्रोपायानन्यांश्च सिरोत्थापनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन
व्याधिवशेन च विदध्यात्॥ मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यादतोऽन्येष्वर्द्धयवमात्र
वा व्रीहिमुखेन। अस्थ्नामुपरि कुठारिकया विध्येदर्द्धयवमात्रम्॥ भवन्ति चात्र॥ अभ्रे-
वर्षासु विध्येत ग्रीष्मकाले तु शीतले। हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः॥
सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक्। मुहूर्त्तं रुद्धा तिष्ठेच्च सुविद्धान्तां विनिर्दि-
शेत्॥ यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका। तथा सिरासु विद्धासु दुष्टमग्रे प्रव-
र्त्तते॥ मूर्च्छितस्यातिमात्रस्य श्रान्तस्य तृषितस्य च। न वहन्ति सिरा विद्धास्तथानुत्थि-
तयन्त्रिताः॥ क्षीणस्य बहुदोषस्य मूर्च्छयाभिद्रुतस्य च। भूयोऽपराह्ने विस्राव्या साप-
रेद्युस्त्र्यहेऽपि वा॥ रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः। न चातिप्रस्रुतं कुर्य्याच्छेषं
संशमनैर्जयेत्॥ बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः। परं प्रमाणमिच्छन्ति प्रस्थं शो-
णितमोक्षणे॥ तत्र पाददाहपादहर्षविबाहुकचिप्यविसर्पवातशोणितवातकण्टकविचर्चिका
पाददारीप्रभृतिषु क्षिप्रमर्मण उपरिष्टाद्द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्। श्लीप-
दे तच्चिकित्सिते यथा वक्ष्यते। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फ-
स्योपरि चतुरङ्गुले। अपच्यामिन्द्रवस्तेरधस्ताद्द्व्यङ्गुले। जानुसन्धेरुपर्य्यधो वा चतुर-
ङ्गुले गृध्रस्यां। ऊरुमूलसंश्रितान्तु गलगण्डे। एतेनेतरसक्थिबाहुश्च व्याख्यातौ॥ विशेषतस्तु-
वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा। एवं दक्षि-
णबाहौ यकृद्दाल्ये कफोदरे चैतामेव च कासश्वासयोरप्यादिशन्ति। गृध्रस्यामिव विश्वाच्यां
श्रोणिप्रतिसमन्तात् द्व्यङ्गुले प्रवाहिकायां शूलिन्यां। परिकर्त्तिकोपदंशशूकदोषशुक्र-
व्यापत्सु मेढ्रमध्ये। वृषणयोःपार्श्वे मूत्रवृद्धौ। नाभेरधश्चतुरङ्गुले सेवन्यां वामपार्श्वे द-
कोदरे। वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च बाहुशोषावबाहुकयो-
रप्येके वदन्त्यंसयोरन्तरे। त्रिकसन्धिमध्यगतां तृतीयके। अधःस्कन्धसन्धिगतामन्यतर-
पार्श्वे संस्थिताञ्चतुर्थके। हनुसन्धिमध्यगतामपस्मारे। शङ्खकेशान्तसन्धिगतामुरोऽपाङ्ग-
ललाटेषु चोन्मादेऽपस्मारे च। जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च। तालुनि ताल-
व्येषु कर्णयोरुपरिसमन्तात् कर्णशूले तद्रोगेषु च। गन्धाग्रहणे नासारोगेषु च नासाग्रे।

तिमिराधिमन्थकप्रभृति चाभयेषु च नासिके ललाटव्यामपाङ्गयाश्चैताएव शिरोरोगाधिमन्थ-प्रभृतिषु रोगेष्विति ॥ अत ऊर्द्ध्वं दुष्टव्यधनमनुव्याख्यास्यामः । तत्र दुर्व्विद्धातिविद्धा कुञ्चिता पिच्चिता कुट्टिता प्रस्रुता अत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिता अनुत्थितविद्धा शस्त्रहता तिर्य्यग्विद्धा अविद्धा अव्याध्या विद्रुता धेनुका पुनःपुनर्विद्धा शिरास्नायूस्थिसन्धिमर्म्मसु चेति विंशतिर्दुष्टव्यधाः ॥ तत्र या सूक्ष्मशस्त्रविद्धा न व्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्व्विद्धा । प्रमाणातिरिक्तविद्धायामन्तःप्रविशति शोणितं शोणितातिप्रवृत्तिर्व्वा सातिविद्धा कुञ्चितायामप्येवम् । कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता । आसादिता पुनः पुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता । शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता । तीक्ष्णमहामुखशस्त्रविद्धा अत्युदीर्णा । अल्परक्तस्राविण्यविद्धा । क्षीणशोणितस्यानिलपूर्णा परिशुष्का । च तुर्भागावसादिता किञ्चित्प्रवृत्तशोणिता कूणिता । दुःस्थानबन्धनाद्वेपमानायाः शोणितसंमोहो भवति सा वेपिता । अनुत्थितविद्धायामप्येवम् । छिन्नातिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता । तिर्य्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा । बहुशःक्षता हीनशस्त्रप्रणिधानेनापविद्धा । अशस्त्रकृत्या अव्याध्या । अनवस्थितविद्धा विद्रुता । प्रदेशस्य बहुशोऽवघट्टनादारोहव्यधा मुहुर्मुहुः शोणितस्रावा धेनुका । सूक्ष्मशस्त्रव्यधनाद्बहुशो विच्छिन्ना पुनः पुनर्व्विद्धा । स्नायूस्थिशिरासन्धिमर्म्मसु विद्धा वा रुजां शोषं वैकल्यं मरणं वापादयति ॥ भवन्ति चात्र ॥ सिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः । मत्स्यवत् परिवर्त्तन्ते तस्माद्यत्नेन ताडयेत् ॥ अजानता गृहीते तु शस्त्रे कायनिपातिते । भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥ स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि । यान्त्याशुव्याधयःशान्तिं यथासम्यक्सिराव्यधात् ॥ सिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः । यथा प्रणिहितः सम्यग्वस्तिः कायचिकित्सिते ॥ तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परिहर्त्तव्यानि क्रोधयासमैथुनदिवास्वप्नवाग्व्यायामयानोत्थानासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबलभाभान्मासमेके मन्यन्ते एतेषां विस्तरमुपरिष्टाद्वक्ष्यामः॥भवतश्चात्र । सिराविषाणतुम्बैस्तुजलौकाभिःपदैस्तथा । अवगाढं यथापूर्व्वं निर्हरेद्दुष्टशोणितं ॥ अवगाढे जलौका स्यात् प्रच्छन्नं पिण्डिते हितं । सिराङ्गव्यापके रक्ते शृङ्गालावू त्वचि स्थिते ॥

## ॥ नवमोऽध्यायः ॥

अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः ।

चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः ॥ तत्र केचिदाहुः शिराधमनीस्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसिचेति । तत्त, न सम्यक् । अन्या एव हि धमन्यः स्रोतांसिच सिराभ्यः कस्माद्वाद्यञ्जनान्यत्वान्मुलसन्नियमात् कर्मवैशेष्यादागमाच्च केवलन्तुपरस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव कर्मसु भवति॥तासान्तु नाभिप्रभवाणां धमनीनामूर्द्धगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यगाः ॥ ऊर्द्धगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादोन्विशेषानभिवहन्त्यः शरीरं धारयन्ति । तास्तु हृदयमभिप्रपन्न स्त्रिधा जायन्ते तास्त्रिंशत् । तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्तादशशब्दरूपरसगन्धानष्टाभिर्गृह्णोति । द्वाभ्यांभाषतेद्वाभ्यां घोषं करोति द्वाभ्यां स्वपितिद्वाभ्यांप्रतिबुध्यते । द्वे चाश्रुवाहिन्यौ । द्वेस्तन्यं स्त्रिया वहतः स्तनसंश्रिते । ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः । तास्त्वेतास्त्रिंशत्सविभागा व्याख्याता एताभिरूर्द्धं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च॥भवति चात्र॥ऊर्द्धगतास्तु कुर्व्वन्तिकर्माण्येतानि सर्व्वशः।अधोगमास्तु वक्ष्यामि कर्म ताऽसां यथायथं।अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति।तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थमेवान्नपानरसं विपक्कमौष्ण्याद्विवेचयन्त्यऽभिवहन्त्यः शरीरं तर्पयन्त्यर्प्पयन्ति चोर्द्ध्वगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति मूत्रपुरीषस्वेदांश्च विवेचयन्त्यामपक्काशयान्तरेचत्रिधा जायन्तेतास्त्रिंशत्।तासान्तु वातपित्तकफशोणितरसान्द्वेद्वे वहतस्ता दशद्वे अन्नवाहिन्यावन्त्राश्रिते तोयवहेद्वे मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे शुक्रवहेद्वे शुक्रप्रादुर्भावायद्वे विसर्गायते एव रक्तमभिवहतोनारीणामार्त्तवसंज्ञं । द्वे वर्च्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे । अष्टावन्यास्तिर्य्यग्गानां धमनीनां स्वेदमर्पयन्ति । तास्त्वेतास्त्रिंशत् सविभागा व्याख्याता एताभिरधोनाभेः पक्काशयकटीमूत्रपुरीषगुदवस्तिमेढ्र सक्थीनि धार्य्यन्ते याप्यन्ते च॥ भवन्ति चात्र ॥ अधोगमास्तु कुर्व्वन्ति कर्माण्येतानि सर्व्वशः । तिर्य्यगाः संप्रवक्ष्यामि कर्म तासां यथायथं ॥ तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैकाशतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्येयास्ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च । तासां मुखानि रोमकूपप्रतिबद्धानि यै स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्वहिश्च तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवोर्य्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचिविपक्कानि तैरेव स्पर्शसुखमसुखं युगृह्णाति । तास्त्वेताश्चतस्रो धमन्यःसर्व्वाङ्गगताः सविभागा व्याख्याताः ॥ भवतश्चा-

त्र ॥ यथा स्वभावतः खानि मृणालेषु बिसेषु च । धमनीनां तथा खानि रसो यैरुपचीयते ॥ पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति । पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः ॥ तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि येष्वधिकारएकेषां बहूनि । एतेषां विशेषा बहवः । तत्र प्राणवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति । अन्नवहे द्वे तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यस्तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्दिःपिपासान्ध्यं मरणं वा । उदकवहे द्वे तयोर्मूलं तालुक्लोम च । तत्रविद्धस्य पिपासा सद्योमरणञ्च । रसवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यस्तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च । रक्तवहे द्वे तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यस्तत्र विद्धस्य, श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति । मांसवहे द्वे तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यस्तत्र विद्धस्य श्वयथुर्मांसशोषः शिराग्रन्थयो मरणम् । मेदोवहेद्वे तयोर्मूलं कटीवृक्कौच तत्र विद्धस्यस्वेदागमनंस्निग्धाङ्गता तालुशोषःस्थूलशोफता पिपासा च । मूत्रवहे द्वे तयोर्मूलं वस्तिर्मेढ्रञ्च तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च । पुरीषवहे द्वे तयोर्मूलं पक्वाशयो गुदञ्च तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च । शुक्रवहे द्वे तयोर्मूलं स्तनौ वृषणौच तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रताच । आर्त्तववहे द्वे तयोर्मूलं गर्भाशय आर्त्तववाहिन्यश्च धमन्यस्तत्र विद्धायां बन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च । सेवनीच्छेदाद्रुजाप्रादुर्भावः । वस्तिगुदविद्धलक्षणं प्रागुक्तमिति ॥ स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत् मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत् । स्रोतस्तदिति विज्ञेयं सिराधमनिवर्जितम्

## ॥ दशमोऽध्यायः ॥

अथातः गर्भिणीव्याकरण शारीरं व्याख्यास्यामः ।

गर्भिणी प्रथमदिवसात् प्रभृति नित्यंप्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि न स्पृशेदुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः शुष्कं पर्य्युषितं कथितं क्लिन्नं चान्नं नोपभुञ्जीत बहिर्निष्क्रमणं शून्यागार चैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कराश्च भारानुच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति नचाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत नचायासयेच्छरीरं पूर्व्वोक्तानि च परिहरेत् । शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात् हृद्यं द्रवं मधुर प्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् सामान्यमेतदाप्रसवात्॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत । विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके । चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलरसासहितं हृद्यमन्नं भोजयेत् - पञ्चमे क्षीरसर्पिः संसृष्टं षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषोमात्रां पाययेद्यवागूं वा सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्यायते गर्भः । अष्टमे बदरोदकेन बलातिबलाशतपुष्पपललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः । ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति । अत ऊर्द्धं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते । नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतञ्चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम् ॥

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने । सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥

तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ॥ प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत् ततः कृतोपधाने मृदुविस्तीर्णशयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति ॥ अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्याद् ब्रूयाच्चैनामेका सुभगे प्रवाहस्वेति न चाप्राप्तावीप्रवाहस्व ततो विमुक्ते गर्भनाड़ीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणबस्तिशिरःसु प्रवाहेथाः शनैः शनैः । ततो गर्भनिर्गमे प्रगाढ़ं ततो गर्भे योनिमुखं प्रपन्ने गाढ़तरमाविशल्यभावात् ॥ अकालप्रवाहणाद्बधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति । तत्र प्रतिलोममनुलोमयेत् ॥ गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा । बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा ॥ अथ जातस्योल्वं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यात्ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत्तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात् ॥ अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्व्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथा दोषं यथाविभवञ्च ॥ धमनीनां हृदिस्थानां विवृतत्वादनन्तरं । चतूरात्रात्त्रिरात्राद्वा स्त्रीणां

स्तन्यं प्रवर्त्तते ॥ तस्मात्प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च । ततः प्राङ्निवारितः स्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत् ॥ अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिःक्वाथेनोपचरेत् सशेष-दोषान्तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत् । एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादादुष्टशोणितात् । विशुद्धे ततो विदा-रिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत्त्रिरात्रम् । ततो यवकोलकु-लत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलञ्चावेक्ष्य । अनेन विधिना-द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात् पुनरार्त्तवदर्शना-दित्येके ॥ धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत् पिप्पल्यादिक-षायानुपानं स्नेहनित्या च स्यात्त्रिरात्रं पञ्चरात्रं वा । बलवतीमबलां यवागूं पायये-त्त्रिरात्रं पञ्चरात्रं वा । अत ऊर्द्ध्वं स्निग्धेनान्नसंसर्गेणोपचरेत् । प्रायशश्चैनां प्रभूतेनो-ष्णोदकेन परिषिञ्चेत् । क्रोधायासमैथुनादीन् परिहरेत् ॥ भवतश्चात्र ॥ मिथ्याचारात्सू-तिकाया यो व्याधिरुपजायते । स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात् ॥ तस्मा-त्तां देशकालौ च व्याधिसात्म्येन कर्म्मणा । परीक्ष्योपचरेदेवं नेयमत्ययमाप्नुयात् ॥ अ-थापरापतन्त्यानाहाध्मानौ कुरुते तस्मात् कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत् । कटुकालाबुकृतवेधनसर्षपसर्पनिर्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत् । लाङ्गली-मूलकल्केन वास्याः पाणिपादतलमालिम्पेत् ॥ मूर्ध्नि वास्या महावृक्षक्षीरमनुसिञ्चयेत् । कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत् । शालिमूलकल्कं वा पिप्पल्या-दिं वा मद्येन सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण सुरामण्डेन वा स्थापयेत् । एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरबस्तिं दद्यात् स्निग्धेन वा कृत्तनखेन हस्तेनाप-हरेत् ॥ प्रजातायाश्च नार्य्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेना-तिसंरुद्धं नाभेरधः पार्श्वयोर्बस्तौ बस्तिशिरसि वा ग्रन्थिं करोति । ततश्च नाभिबस्तु-दरशूलानि भवन्ति सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः । समन्ता-दाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम् । तत्र वीरतर्वादिसिद्धं जलमूषकादिप्र-तीवापं पाययेत् । यवक्षारचूर्णं वा सर्पिषा सुखोदकेन वा लवणचूर्णं वा पिप्पल्यादिक्वा-थेन पिप्पल्यादिचूर्णं सुरामण्डेन वरुणादिक्वाथं वा पञ्चकोलैलाप्रतीवापं पृथक्पर्ण्या-दिक्वाथं वा भद्रदारुमरिचसंसृष्टं पुराणगुडं वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं खादेदच्छं वा पिबेदरिष्टमिति ॥ अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शाययेत् । पीलुबदरीनिम्बपरूषकशाखाभिश्चैनं वीजयेत् । मूर्ध्नि चास्याहरहस्तैलपिचुमवचार-येत् । धूपयेच्चैनं रक्षोघ्नैर्धूपैः । रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत् तिला-

तमोसर्षपकणांश्चात्र प्रकिरेत्। अधिष्ठाने चाग्निं प्रज्वालयेत। व्रणितोपासनीयञ्चावेक्षेत॥ ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं नक्षत्रनाम वा ततो यथावर्णं धात्रीमुपेयान्मध्यप्रमाणां मध्यमवयसमरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्द्ध्वस्तनीमव्यसनिनीं जीववत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्म्मिणीं कुले जातामतोभूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यबलवृद्धये बालस्य तत्रोर्द्ध्वस्तनी कराला कुर्य्यात्लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्॥ ततः प्रशस्तायां तिथौ शिरःस्नातामहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्रमन्त्रेणानेन पाययेत्॥ चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः। भवन्तु सुभगे नित्यं बालस्य बलवृद्धये॥ पयोऽमृतरसं पीत्वा कुमारास्ते शुभानने। दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा॥ अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्यहत्राधिजन्य भवति। अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्स्रुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः। तस्मादेवंविधानं स्तन्यं न पाययेत्॥ क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति। अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्ययवगोधूमशालिषष्टिक मांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनलिकालाबूकालशाक प्रभृतीनि विदध्यात्॥ अथास्याः स्तन्यमप्सु परीक्षेत तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात्तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधितशोकार्त्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्ष्य विरुद्धाहारतर्पितायाः स्तन्यं पाययेन्नाजीर्णौषधञ्च बालं दोषौषधमलानां तीव्रवेगोत्पत्तिं भयात्॥ भवन्ति चात्र॥ धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा। दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति॥ मिथ्याहारविहारिण्याः दुष्टा वातादयस्त्रियाः। दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः॥ भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत्। अङ्गप्रत्यङ्गदेशेतु रुजा यत्रास्य जायते॥ मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति। निमीलिताक्षो मूर्द्धस्थे शिरोरोगे न धारयेत्॥ वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति। विण्मूत्रसङ्गवैवर्ण्य च्छर्द्याध्मानान्त्र कूजनैः॥ कोष्ठे दोषान्विजानीयात् सर्व्वत्रस्थांश्च रोदनैः। तेषु च यथाभिहितं स्नेहच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात् क्षीरान्नादस्यात्मनि धात्र्याश्चान्नादस्य कषायादीनात्मन्येव न धात्र्याः॥ तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलिपर्व्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात् कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय कोल सम्मितामन्नादायेति॥ येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः। तेषु तत्कल्कसंलिप्तौ पाययेत् शिशुं स्त-

नौ ॥ एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे । स्तन्यपायाहितं सर्पिरितराभ्यां यथा-
र्थतः ॥ नच तृष्णाभयादत्र पाययेत् शिशुं स्तनौ । विरेकवस्तिवमनान्यृते कुर्य्याच्च ना-
त्ययात् ॥ मस्तुलुङ्गक्षयाद्यस्य वायुस्तालवस्थि नामयेत् । तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुर-
कैः शृतं ॥ पानाभ्यञ्जनयोर्योज्यं शीताम्बु द्विजनन्तथा । वातेनाध्मापितां नाभिं सरुजां
तुण्डिसंज्ञितां ॥ मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः । गुदपाके तु बालानां पित-
घ्नीं कारयेत्क्रियां ॥ रसाञ्जनं विशेषेण पानालेपनयोर्हितं ॥ क्षीराहाराय सर्पिः पायये-
त् सिद्धार्थकवचामांसीपयस्यापामार्गशतावरीशारिवाब्राह्मी पिप्पलीहरिद्राकुष्ठसैन्धव-
सिद्धं क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धमन्नादाय द्विपञ्चमूलीक्षीरतग-
रभद्रदारुमरिचमधुविडङ्गद्राक्षाद्विब्राह्मीसिद्धं । तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ॥
बालं पुनर्गात्रसुखं गृह्णीयान्नचैनं तर्जयेत् सहसा न प्रतिबोधयेद्वित्रासभयात् सहसा
नापहरेदुत्क्षिपेद्वा वातादिविघातभयान्नोपवेशयेत् कौब्जभयात् नित्यं चैनमनुवर्त्तेत
प्रियशतैरजिघांसुः । एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्वसम्पन्नो नीरोगः सु-
प्रसन्नमनाश्च भवति । वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृहच्छायादि-
भ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ॥ नाशुचौ विसृजेद्बालं नाकाशे विषमे नच । नोष्ण-
मारुतवर्षेषु रजोधूमोदकेषु च ॥ क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा । दद्यादास्त-
न्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया ॥ षण्मासञ्चैनमन्नं प्राशयेल्लघु हितञ्च । नित्यमव-
रोधरतश्च स्यात् कृतरक्ष उपसर्गभयात् । प्रयत्नतश्च रक्ष्या बाला भवन्ति ॥ अथ कुमार
उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परिणुदति दन्तान्
खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्द्धं निरीक्षते फेणमुद्वमति सन्दष्टौष्ठः क्रूरो भि-
न्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्ब्बलो म्लानाङ्गो मत्स्यच्छुछुन्दरिमत्कुणगन्धो
यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षण-
मुक्तं विस्तरेणोत्तरे वक्ष्यामः ॥ शक्तिमन्तञ्चैनं ज्ञात्वा यथावर्णं विद्यां ग्राहयेत् । अथा-
स्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति ॥
ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिं । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरंजीवेज्जीवेद्वा दुर्ब्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारये-
त् ॥ अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्व्वीत ।
पुरुषस्याप्येवं विधस्य त एवदोषाः सम्भवन्ति ॥ तत्र पूर्वोक्तैः कारणैः पतिष्यति गर्भे ग-
र्भाशयकटीवङ्क्षणवस्तिशूलानि रक्तदर्शनञ्च तत्र शीतैः परिषेकावगाहप्रदेहादिभिरुप-
चरेज्जीवनीयशृतक्षीरपानैश्च गर्भस्फुरणे मुहुर्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पा-
ययेत् ॥ प्रस्रंसमाने सदाहपार्श्वपृष्ठशूलासृग्दरानाहमूत्रसङ्गाः स्थानात् स्थानञ्चोप-

क्रामति गर्भे कोष्ठे संरम्भस्तत्र स्निग्धशीताः क्रियाः ॥ वेदनायां महासहाक्षुद्रसहामधु-
कश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत् मूत्रसङ्गे दर्भादिसिद्धं ; आ-
नाहे हिङ्गुसौवर्चललशुनवचासिद्धम् । अत्यर्थं स्रवति रक्ते कोष्ठागारिकागार मृत्पिण्ड
समङ्गाधातकीकुसुम नवमालिकागैरिकसर्जरसरसाञ्जनचूर्णं मधुनावलिह्याद्यथालाभं
न्यग्रोधादि त्वक्प्रबालकल्कं वा पयसा पाययेदुत्पलादिकल्कं वा कशेरुशृङ्गाटकशालू-
ककल्कं वा शृतेन पयसोडुम्बरफलौदककन्दकाथेन वा शर्करामधुमधुरेण शालिपिष्टं
न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत् ॥ अथादृष्टशोणित वेदनायां
मधुकदेवदारुपयस्यासिद्धं पयः पाययेत् तदेवाश्मन्तकशतावरीपयस्यासिद्धं विदारिग-
न्धादि सिद्धं वा बृहतीद्वयोत्पलशतावरी सारिवापयस्यामधुक सिद्धं वैवं क्षिप्रमुपक्रा-
न्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते ॥ व्यवस्थिते च गर्भे गव्ये नडुम्बरशलाटुसिद्धे-
न पयसा भोजयेत् । अतीते लवणस्नेहवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसं-
स्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि । वस्तूदरशूलेषु पुराणगुडं दी-
पनीयसंयुक्तं पाययेदरिष्टं वा । वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः सोऽतिका-
लमवतिष्ठमानो व्यापद्यते तां मृदुना स्नेहादिक्रमेणोपचरेत् । उत्क्रोशरससंसिद्धाम-
नल्पस्नेहां यवागूं पाययेत् । माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधु
माध्वीकं वा नुपिबेत् सप्तरात्रम् । कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदुखलं-
मूषलेनाभिहन्याद्विषमे वा यानासने सेवेत ॥ वाताभिपन्न एव शुष्यति गर्भं स मातुः
कुक्षिं न पूरयति मन्दं स्पन्दते च तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत् । शुक्रशोणितं
वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषाप-
हृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुस्तत्रापि लीनवत् प्र-
तीकारः ॥ अत ऊर्द्धं मासानुमासिकं वक्ष्यामः । मधुकं शाकबीजञ्च पयस्या सुरदारु च ॥
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी । वृक्षादनी पयस्या च लता चोत्पलसारि-
वा ॥ अनन्ता सारिवा रास्ना पद्मा मधुकमेव च । बृहत्यौ काश्मरी चापि क्षीरिशुङ्गा-
स्त्वचो घृतं ॥ पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका । शृङ्गाटकं विसं द्राक्षा कशेरु
मधुकं सिता ॥ वत्सैते सप्तयोगाः स्युरर्द्धश्लोक समापनाः । यथा सङ्ख्यं प्रयोक्तव्या गर्भ-
स्रावे पयोयुताः ॥ कपित्थबृहती विल्वपटोलेक्षुनिदिग्धिकाः । मूलानि क्षीरसिद्धानि
पाययेद्भिषगष्टमे ॥ नवमे मधुकानन्तापयस्यासारिवाः पिबेत् । क्षीरं शुण्ठीपयस्याभ्यां
सिद्धं स्याद्दशमे हितं ॥ सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च । एवमाप्यायते ग-
र्भस्तीव्रा रुक् चोपशाम्यति ॥ निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्धं प्रसवमाना-
या नार्य्याः कुमारोऽल्पायुर्भवति । अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेना-

न्नोपहितेनानुलोमयेच्च संशमनीयञ्च मृदु विदध्यादन्नपानयोरश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥ भवन्ति चात्र ॥
सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा । मत्स्याचकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनं ॥
अर्कपुष्पी मधुघृत चूर्णितं कनकं वचा । हेमचूर्णानि कैढर्य्यः श्वेता दुर्व्वा घृतं मधु ॥ चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि । कुमाराणां वपुर्मेधा बलबुद्धि विवर्द्धनाः ॥

इति सुश्रुते आयुर्व्वेदशास्त्रे तृतीयं शारीरस्थानं समाप्तम् ।

—***—

# ॥ चिकित्सितस्थानम् ॥

—****—

## प्रथमोऽध्यायः ॥

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः ।

द्वौ व्रणौ भवतः शारीर आगन्तुकश्चेति । तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः ॥ आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषु परशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः ॥ तत्र तुल्येव्रणसामान्येद्विकारणोत्थानप्रयोजनसामर्थ्याद्द्विव्रणीयइत्युच्यते । सर्व्वस्मिन्नेवागन्तुव्रणेतत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थं पित्तवच्छीतक्रियावधारणविधिर्विशेषः सन्धानार्थञ्चमधुघृतप्रयोग इत्येतद्द्विकारणोत्थानप्रयोजनमुत्तरकालन्तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः ॥ दोषोपप्लवविशेषः पुनः समासतःपञ्चदशप्रकारः प्रसरणसामर्थ्याद्यथोक्तो व्रणप्रश्नाधिकारे शुद्धत्वात् षोड़शप्रकार इत्येके ॥ तस्य लक्षणं द्विविधं सामान्यं वैशेषिकञ्च । तत्र सामान्यं रुक् व्रणगात्रविचूर्णने व्रणतीति व्रणः । विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः ॥ तत्र श्यावारुणाभस्तनुः शीतपिच्छिलाल्पस्रावीरूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनावहुलोनिर्मांसश्चेति वातात् ॥ क्षिप्रजः पीतनीलाभः किंशुकोदकाभोष्णस्रावी दाहपाकरागविकारो पीतपिड़काजुष्टश्चेति पित्तात्॥ प्रततचण्डकण्डूबहुलः स्थूलो घनः स्तब्धसिरास्नायुजालावततः कठिनःपाण्डुवभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात् ॥ प्रवालदलनिचयप्रकाशः कृष्णस्फोटपिडका जालोपचितस्तुरङ्गस्थानगन्धः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेतिरक्तात् ॥ तोददाहधूमायनप्रायः पीतारुणाभासस्तद्वर्णस्रावीचेति वातपित्ताभ्याम् ॥ कण्डूयनशीलः सनिस्तोदो दारुणो मुहुर्मुहुः शीतपिच्छिलस्रावी चेति वातश्लेष्मभ्यां ॥ गुरुः सदाह उष्णः पीतः पाण्डुस्रावी चेति पित्तश्लेष्मभ्यां॥ रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णस्रावीचेति वातशोणिताभ्यां ॥ घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्प्युष्णकृष्णस्रावीचेति पित्तशोणिताभ्यां॥ रक्तोगुरुः पिच्छिलःकण्डूप्रायःस्थिरःसरक्तपाण्डुस्रावीचेति श्लेष्मशोणिताभ्यां॥ स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावीचेतिवातपित्तशोणितेभ्यः॥ कण्डूस्फुरणचुमचुमायनप्रायः पाण्डुघनरक्ताऽऽस्रावीचेतिवात-

श्लेष्मशोणितेभ्यः ॥ दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावो चेतिश्लेष्मपित्तशोणितेभ्यः ॥ त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः ॥ निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलोनानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः ॥ जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धोव्रण इति ॥ तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति ॥ तद्यथा ॥ अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणमुत्कारिका कषायोवर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म दारुणकर्म क्षारकर्माग्निकर्मकृष्णकर्म पाण्डुकर्म प्रतिसारणं रोमसञ्जननं लोमापहरणं वस्तिकर्मोत्तरवस्तिकर्म बन्धः पत्रदानं कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमोमधु सर्पिर्यन्त्रमाहारो रक्षाविधानम् ॥ तेषु कषायोवर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनमितिशोधनरोपणानि ॥ तेष्वष्टौ शस्त्रकृत्याः ॥ शोणितास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि ॥ स्नेहस्वेदनवमनविरेचनवस्त्युत्तरवस्तिशिरोविरेचननस्यधूमकवलधारणान्यन्यत्र वक्ष्यामः । यदन्यदवशिष्टमुपक्रमजातं तदिहवक्ष्यते ॥ षड्विधः प्रागुपदिष्टः शोफस्तस्यैकादशोपक्रमा भवन्त्यपतर्पणादयो विरेचनान्तास्ते च विशेषेण शोथप्रतीकारा वर्त्तन्ते व्रणभावमापन्नस्य च न विरुध्यन्ते शेषास्तु प्रायेण व्रणप्रतीकार हेतव एव । अपतर्पणन्त्वाद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च ॥ दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः । अवेक्ष्य दोषं प्राणञ्च कार्य्यं स्यादपतर्पणं ॥ ऊर्द्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः । न कार्य्यं गर्भिणीवृद्धबालदुर्वलभीरुभिः ॥ शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च । यथास्वैरौषधैर्लेपं प्रत्येकञ्चैव कारयेत् ॥ यथा प्रज्वलितेवेश्मन्यम्भसा परिषेचनं । क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः ॥ प्रह्लादने शोधने च शोफस्य हरणे तथा । उत्सादने रोपणे च लेपः स्यात्तुतदर्थकृत् ॥ वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिःक्वाथैरशीतैः परिषेकान् कुर्वीत ॥ पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिःक्वाथैरनुष्णैः परिषेकान् कुर्वीत ॥ श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैरशीतैः परिषेकान् कुर्वीत ॥ यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति । दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुताञ्चकरोति ॥ स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते । पाक्यकर्मसु चादिष्टः स च विस्रावणादिषु ॥ रुजावतां दारुणानां कठिनानां तथैव च । शोफानां स्वेदनं कार्य्यं येचाप्येवं विधाव्रणाः ॥ स्थिनां

राणां रुजत्रां मन्दं कार्य्यं विम्लापनं भवेत् । अभ्यज्य स्वेदयित्वा तु वेणुना वा श-
नैः शनैः ॥ विमर्दयेद्भिषक् प्राज्ञस्तलेनांगुष्ठकेन वा । शोफयोरुपनाहन्तु कुर्य्यादामावद-
ग्धयोः ॥ अविदग्धः शमं याति विदग्धः पाकमेति च । निवर्त्तते न यः शोफो विरेका-
न्तैरुपक्रमैः ॥ तस्य सम्पाचनं कुर्य्यात् समाहृत्यौषधानि तु । दधितक्रसुरासुक्तधान्याम्लै
र्योजितानि तु ॥ स्निग्धानि लवणोत्कृत्य पचेदुत्कारिकां शुभां । सैरण्डपत्रया शोफं नाह-
येदुष्णया तया ॥ हितं सम्भोजनं चापि पाकायाभिमुखो यदि । वेदनोपशमार्थाय त-
था पाकशमाय च ॥ अचिरोत्पतिते शोफे कुर्य्याच्छोणितमोक्षणं । सशोफे कठिने श्या-
मे सरक्ते वेदनावति ॥ संरब्धे विषमे वापि व्रणे विस्रावणं हितं । सविषे च विशेषेण ज-
लौकाभिः पदैस्तथा ॥ वेदनायाः प्रशान्त्यर्थं पाकस्याप्राप्तये तथा । सोपद्रवाणां रूक्षाणां
कृशानां व्रणशोषिणां ॥ यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते । उत्सन्नमांसशोफे तु
कफजुष्टे विशेषतः ॥ संक्लिष्टश्यामरुधिरे व्रणे प्रच्छर्दनं हितं । वातपित्तप्रदुष्टेषु दीर्घ-
कालानुबन्धिषु ॥ विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः । अपाकेषु तु रोगेषु कठिनेषु
स्थिरेषु च ॥ स्नायुकोथादिषु तथाच्छेदनं प्राप्तमुच्यते । अन्तः पूयेष्ववक्त्रेषु तथैवोत्सङ्गव-
त्स्वपि ॥ गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते । बालवृद्धसहक्षीणभीरूणां योषितामपि ॥
मर्म्मोपरि च जातेषु रोगेषूक्तश्च दारुणम् । सुपक्वे पिण्डिते शोफे पीडनैरवपीड़िते ॥ पाकोद्-
वृत्तेषु दोषेषु तत्तु कार्य्यं विजानता । सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः ॥ कठिनान्
स्थूलवृत्तोष्ठान्दीर्य्यमाणान् पुनः पुनः । कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥ समं
लिखेत्सुलिखितं लिखेन्निरवशेषतः । वर्त्मनानुप्रसार्येन समं शस्त्रेण निर्लिखेत् ॥ क्षौमं
प्लोतं पिचुं फेनं यावशूकं ससैन्धवं । कर्कशानि च पत्राणि लेखनार्थं प्रदापयेत् ॥ नाडीव्रणान्
शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः । करीरबालांगुलिरेषण्या वैषयेद्भिषक् ॥ नेत्रवर्त्म गुदाभ्या-
सनाद्योऽवक्त्राः सशोणिताः । चुचूपोदकजैः श्लक्ष्णैः करीरैरेषयेत्तु ताः ॥ संवृतासंवृतास्येषु
व्रणेषु मतिमान् भिषक् । यथोक्तमाहरेच्छल्यं प्राप्तोद्धरणलक्षणं ॥ रोगे व्यधनसाध्ये तु यथोद्दे
शं प्रमाणतः । शस्त्रं निदध्याद्दोषञ्च स्रावयेत्कीर्त्तितं यथा ॥ अपाकोपद्रुता ये च मांसस्था
विवृतास्वरे । यथोक्तं सीवनं तेषु कार्य्यं सन्धानमेव च ॥ पूयगर्भानणुद्वारान्व्रणान्ममर्मगता-
नपि । यथोक्तैः पीडनद्रव्यैः समन्तात्परिपीडयेत् ॥ शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति । न
चाभिमुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥ तैस्तैर्न्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशं । का-
र्य्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत् ॥ दाहपाकज्वरवतां व्रणानां पित्तकोपतः । र-
क्तेन चाभिभूतानां कार्य्यं निर्वापणं भवेत् ॥ यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृतप्लुतैः । दि-
ह्यादबहलाल्लेपान् सुशीतांश्चावचारयेत् । व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु ॥ तोद-
काठिन्यपारुष्यशूलवेपथुमत्सु च । वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥ स्नैहिकेषु च

बीजेषु पचेदुत्कारिकां शुभां । तेषाञ्च स्वेदनं कार्य्यं स्थिराणां वेदनावतां ॥ दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः । कषायैः शोधनं कार्य्यं शोधनैः प्रागुदीरितैः ॥ अन्तःशल्यानणुमुखानगम्भीरान्मांससंश्रितान् । शोधनद्रव्ययुक्ताभिर्वर्त्तिभिस्तानुपाचरेत् ॥ पूतिमांसप्रतिच्छन्नान्महादोषांश्च शोधयेत् । कल्कीकृतैर्यथालाभं वर्त्तिद्रव्यैः पुरोदितैः । पित्तप्रदुष्टान् गम्भीरान्दाहपाकप्रपीडितान् । कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा ॥ उत्सन्नमांसानस्निग्धानल्पास्रावान् व्रणांस्तथा । सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् । तैलेनाशुध्यमानानां शोधनीयां रसक्रियां । व्रणानां स्थिरमांसानां कुर्य्यात् द्रव्यैरुदीरितैः ॥ कषाये विधिवत्तेषां कृते व्यामिश्रयेत्पुनः । सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलां ॥ हरितालञ्च मतिमांस्ततस्तामवचारयेत् । मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम् व्रणेषु दत्वा तां तिष्ठेत्त्रींस्त्रीन्श्च दिवसान्परं । गम्भीरान्मेदसा जुष्टान्दुर्गन्धांश्चूर्णशोधनैः ॥ उपाचरेद्भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्त्तिजैः । शुद्धलक्षणयुक्तानां कषायं रोपणं हितम् ॥ तत्र कार्य्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता । अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥ हिता रोपणवर्त्तिः स्यात्कृता रोपणवर्त्तयः । अपेतपूतिमांसानां मांसस्थानामरोहतां ॥ कल्कः संरोहणः कार्य्यस्तिलजो मधुसंयुतः । स माधुर्य्यात्तथौष्ण्यात्स्नेहाच्चानिलनाशनः ॥ कषायभावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तहृत् । औष्ण्यात्कषायभावाच्च तिक्तत्वाच्च कफे हितः शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः । निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥ पूर्वाभ्यां सर्पिषाचापि युक्तः संरोपणो भवेत् । तिलवद्यवकल्कन्तु केचिदाहुर्मनीषिणः ॥ शमयेदविदग्धञ्च विदग्धमपि पाचयेत् । पक्वं भिनत्ति भिन्नञ्च शोधयेद्रोपयेत्तथा ॥ पित्तरक्तविषागन्तून्गभीरानपि च व्रणान् । रोपयेद्रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥ कफवाताभिभूतानां व्रणानां मतिमान् भिषक् । कारयेद्रोपणं तैलं भेषजैस्तद्यथोदितैः ॥ वन्ध्यानाञ्चलस्थानां शुद्धानाञ्च प्रदुष्यतां । द्विहरिद्रायुतां कुर्य्याद्रोपणार्थां रसक्रियां ॥ समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् । चूर्णं विदध्यान्मतिमान्प्राक्स्थानोक्तो विधिर्यथा ॥ शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्त्तितः । पूर्व्वव्रणानां सामान्ये नोक्तो दोषो विशेषतः ॥ एष आगमसिद्धत्वात्तथैव फलदर्शनात् । मन्त्रवत्सं प्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥ स्वबुद्ध्या चापि विभजेत्कषायादिषु सप्तसु । भेषजानि यथायोगं यान्युक्तानि पुरा मया ॥ आद्यो द्वे पञ्चमूल्यौ तु गणौ यश्चानिलापहः । स वातदुष्टे दातव्यः कषायादिषु सप्तसु ॥ न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः । तौ पित्तदुष्टे दातव्यौ काषायादिषु सप्तसु ॥ आरग्वधादिस्तु गणो यश्चोष्णः परिकीर्त्तितः । तौ देयौ कफदुष्टे तु संसृष्टे संयुता गणाः ॥ वातात्मकानुग्ररुजान् सास्रावानपि च व्रणान् । स क्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत् ॥ परिशुष्काल्पमांसानां गम्भीराणां तथैव च । कुर्य्या-

दुत्सादनीयानि सर्पीं ष्यालेपनानि च॥मांसाग्निनाञ्च मांसानि भक्षयेद्विधिवन्नरः। विशुद्धमनसस्तस्य मांसं मांसेन वर्द्धते॥उत्सन्नस्तदुमांसानां व्रणानामवसादनं। कुर्य्यात् द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह॥ कठिनानाममांसानां दुष्टानां मातरिश्वना। मृद्वी क्रिया विधातव्याशोणितं चापिमोचयेत्॥वातघ्नौषधसंयुक्तान्स्नेहान्सेकांश्च कारयेत्।व्रणेषु मृदुमांसेषु दारुणीकरणं हितं॥ धवप्रियंग्वशोकानां रोहिण्याश्च त्वचस्तथा। त्रिफलाधातकीपुष्परोध्रसर्ज्जरसान्समान्॥ कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत्। उत्सन्नमांसान्कठिनान्कण्डूयुक्तांश्चिरोत्थितान्॥तथैव खलु दुःशोधन्शोधायेत्क्षारकर्मणा॥स्रवतोऽश्मनभवान्मूत्रं ये चान्ये रक्तवाहिनः॥निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्मणा। दुरूढत्वात्तु शुक्लानां कृष्णकर्म हितं भवेत्॥भल्लातकान्वासयेत्तु चीरे प्राक्सूत्रभावितान्। ततो द्विधाच्छेदयित्वा लौहेकुम्भे निधापयेत्॥ कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत्। मुख मुखेन सन्धाय गोमयैर्दाहयेत्ततः॥ यः स्नेहश्च्यवते तस्माद्ग्राहयेत्तं शनैर्भिषक्। ग्राम्यानूपशफान्दग्धान्सूक्ष्मचूर्णानि कारयेत्॥ तैलेनानेन संसृष्टं शुक्लमालेपयेद्व्रणं। भल्लातकविधानेन सारस्नेहांस्तु कारयेत्॥ ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितं। दुरूढत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत्॥ सप्तरात्रं स्थितं चीरेच्छागले रोहिणीफलं। तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितं॥ नवं कपालिकाचूर्णं वैदुलं सर्जनाम च। कासीसं मधुकञ्चैव चौद्रयुक्तं प्रलेपयेत्॥ कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत्। कासीसं रोचनां तुत्थं हरितालं मनःशिलां॥ वेणुनिर्लेखनं चापि प्रपुन्नाडरसाञ्जनं। अधस्तादर्ज्जुनस्यैतन्मासं भूमौ निधापयेत्॥ मासादूर्द्ध्वं ततस्तेन कृष्णमालेपयेद्व्रणं। कुक्कुटाण्डकपालानि कतकं मधुकं समं॥ तथा समुद्रमण्डूकीमणिचूर्णञ्च दापयेत्॥ गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणं। हस्तिदन्तमसी कृत्वा मुख्यंचैव रसाञ्जनं॥ रोमाख्येतेन जायन्ते लेपात्पाणितलेष्वपि। चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना॥ तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः। कासीसं नक्तमालस्य पल्लवांश्चैव संहरेत्॥ कपित्थरसपिष्टानि रोमसञ्जननं परं। रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति॥ क्षुरकर्त्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत्। शङ्खचूर्णस्य भागौ द्वौ हरितालस्य भागिकं॥ शुक्तेन सह पिष्टानि लोमशातनमुत्तमं। तैलं भल्लातकस्याथ स्नुहीचीरं तथैव च॥प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमं। कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी॥ वीजं शीतोदपिष्टं वा रोमशातनमाचरेत्। आगारगोधिकापुच्छं रम्भालं वीजमिङ्गुदं॥ दग्ध्वा तड्गस्मतैलाम्बु सूर्य्यपक्वं कचान्तकृत्। वातदुष्टो व्रणो यस्तु रूक्षश्चात्यर्थवेदनः॥ अधःकाये विशेषेण तत्र वस्तिर्विधीयते। मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे॥ तथैवार्त्तवदोषे च वस्तिरप्युत्तरो हितः। यस्मात्कुप्यति बन्धेन व्रणो याति च मार्दवं॥

रोहत्यपि च निःशङ्कस्तस्माद्दन्धो विधीयते। स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहतां॥
पत्रदानं भवेत्कार्य्यं यथादोषं यथर्त्तु च। एरण्डभूर्ज्जपूतीकहरिद्राणान्तु वातजे॥ पत्र-
माश्ववलं यच्च काश्मरीपत्रमेव च। पत्राणि चीरवृक्षाणामौदकानि तथैव च॥ दूषिते
रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः। पाठामूर्वागुडूचीनां काकमाचीहरिद्रयोः॥ पत्रं च
शुकनाशाया योजयेत्कफजे व्रणे। अकर्कशमविक्लिन्नमजीर्णं सुकुमारकं॥ अजन्तुजग्धं
मृदु च पत्रं गुणवदुच्यते। स्नेहमौषधसारञ्च पट्टवस्त्रान्तरीकृतं॥ न दूषयति यत्पत्रं ले-
पस्योपरि दापयेत्। शैत्यौष्ण्यजनननार्थाय स्नेहसंग्रहणाय च॥ दत्तौषधेषु दातव्यं पत्रं
वैद्येन जानता। मक्षिका व्रणजातस्य निःक्षिपन्ति यदा कृमीन्। श्वयथुर्भक्षिते तैस्तु
जायते भृशदारुणः॥ तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते। सुरसादिर्हितस्तत्र धा-
वने पूरणे तथा॥ सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः। हिता गोमूत्रपिष्टाश्च सेकः चा-
रोदकेन वा॥ प्रच्छाद्य मांसपेश्या च कृमीनपहरेद्व्रणात्। विंशतिः कृमिजातीस्तु व-
क्ष्याम्युपरि भागशः॥ दीर्घकालातुराणान्तु कृशानां व्रणशोषिणां। बृंहणीयो विधिःस-
र्वः कार्य्योऽग्निं परिरक्षिता॥ विषजुष्टस्य विज्ञानं विषनिश्चयमेव च। चिकित्सितञ्चवक्ष्या-
मि कल्पे तु प्रतिभागशः॥ कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः॥ शिरोविरेचनं
तेषु विदध्यात्कुशलो भिषक्॥ रुजावन्तोऽनिलाविष्टारूक्षा ये चोर्द्ध्वजत्रुजाः। व्रणेषु तेषु
कर्त्तव्यं नस्यं वैद्येन जानता॥ दोषप्रच्यवनार्थाय रुजादाहक्षयाय च। जिह्वादन्तस-
मुत्थस्य हरणार्थं मलस्य च॥ शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै। उष्णो वा यदि
वा शीतः कवलग्रह इष्यते॥ ऊर्द्ध्वजत्रुगतान् रोगान् व्रणांश्च कफवातजान्। शोफस्रा-
वरुजायुक्तान् धूमपानैरुपाचरेत्॥ क्षतोष्मणा निग्रहार्थं सन्धानार्थं तथैव च। सद्योव्रणे-
ष्वायतेषु क्षौद्रसर्पिर्विधीयते॥ अवगाढास्त्वणुमुखा ये व्रणाः शल्यपीड़िताः। निर्वृत्तह-
स्तोद्धरणा यन्त्रं तेषु विधीयते॥ लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः। सर्वव्रणे-
भ्यो देयस्तु सदाहारो विजानता॥ निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः। रक्षावि-
धानैरुद्दिष्टैर्यमैः सनियमैस्तथा॥ षण्मूलोऽष्टपरिस्राही पञ्चलक्षणलक्षितः। षष्टुरुपक्रम-
निर्दिष्टश्चतुर्भिः साध्यते व्रणः॥ योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया। द्रव्याणां त-
त्समानानां तत्रावापो न दुष्यति॥ प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः। यथोपपत्ति
तत्रापि कार्य्यमेवं चिकित्सितं॥ गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकं। तदुद्धरेद्यौ-
गिकन्तु प्रक्षिपेदप्यकीर्त्तितं॥ उपद्रवास्तुद्विविधा व्रणस्य व्रणितस्य च। तत्र गन्धादयः
पञ्चव्रणस्योपद्रवाः स्मृताः॥ ज्वरातीसारौ मूर्च्छा च हिक्काच्छर्दिररोचकः। श्वासकासा-
विपाकाश्च तृष्णा च व्रणितस्य च॥ व्रणक्रियास्वेवमाद्य व्यासेनोक्तास्वपि क्रियां। भूयो-
ऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते॥

## ॥ द्वितीयोऽध्यायः ॥

अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः।

धन्वन्तरिर्धर्मभृतां वरिष्ठो वाग्विशारदः। विश्वामित्रात्मजमृषिं शिष्यं सुश्रुतमन्वशात् ॥ नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः। नाना रूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणं ॥ आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा। अर्द्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥ शरावनिम्नमध्याश्च यवमध्यास्तथापरे। एवं प्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥ दोषजा वा स्वयं भिन्ना नतु वैद्यनिमित्तजाः। भिषग्व्रणाकृतज्ञो हि न मोहमधिगच्छति॥ अशन्दुर्दर्शरूपेषु व्रणेषु विकृतेष्वपि। अनेकाकृतिरागन्तु स भिषग्भिः पुरातनैः ॥ समासतो लक्षणतः षड्विधः परिकीर्त्तितः। छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ॥ घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणं। तिरश्चीनऋजु, र्वापि यो व्रणश्चाततो भवेत् ॥ गात्रस्य पातनं चापिच्छिन्नमित्युपदिश्यते। कुन्तशक्त्यृष्टिखड्गाग्रविषाणादिभिराशयः ॥ हतः किञ्चित्स्रवेत्तद्धि भिन्नलक्षणमुच्यते। स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ॥ हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते। तस्मिन्भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते। मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति। मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च ॥ विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽचिरन्तता। लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ॥ हृच्छूलं पार्श्वयोश्चापि विशेषश्चात्र मे शृणु। आमाशयस्थे रुधिरे रुधिरं छर्दयेत्पुनः ॥ आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणं। पक्वाशयगते चापि रुजो गौरवमेव च ॥ शीतता चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः ॥ अभिन्नेऽप्याशयेऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणं। पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवं॥ सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद्विना। उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥ नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितं। विषमं व्रणमङ्गे यत्तत्क्षतमभिनिर्दिशेत् ॥ प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतं। सास्थि तत्पिच्चितं विद्यान्मज्जारक्तपरिप्लुतं ॥ विगतत्वग्यदङ्गं हि सङ्घर्षादन्यथापि वा। उषास्रावान्वितं तत्तु घृष्टमित्युपदिश्यते ॥ छिन्ने भिन्ने तथा विद्धे क्षते वासृगतिस्रवेत्। रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशं ॥ स्नेहपानं हितं तत्र तत्सेको विहितस्तथा। वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनं ॥ धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च। वातघ्नौषधसिद्धैश्च स्नेहैर्वस्तिर्विधीयते ॥ पिच्चिते च विघृष्टे च नातिस्रवति शोणितं॥ अगच्छति भृशं तस्मिन्दाहः पाकश्च जायते। तन्तोष्मणो निग्रहार्थं तथा दाहप्रपाकयोः ॥ शीतमालेपनं कार्य्यं परिषेकश्च शीतलः॥ षट्स्वेतेषु यथोक्तेषु छिन्नादिषु समासतः। ज्ञेयं समर्पितं सर्वं सद्योव्रणचिकित्सितं ॥ अत

ऊर्द्ध्वं प्रवक्ष्यामिच्छिन्नानान्तुचिकित्सितं ॥ ये व्रणा विवृताःकेचेच्छिरः पार्श्वावलम्बिनः ।
तासीन्व्यं द्विधिनोक्तेन बध्नीयादृगाढमेव च ॥ कर्णं स्थानादपवृत्तं स्थापयित्वा तयोस्थि-
तं । सीव्यं यथोक्तं तैलेन स्रोतश्चाप्यभितर्पयेत् ॥ कृकाटिकान्ते च्छिन्ने तु गच्छत्यपि
समीरणे । सम्यग्निवेश्य बध्नीयात्सीव्यं चापि निरन्तरं ॥ आजेन सर्पिषा चैव परिषेकन्तु
कारयेत् । उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः ॥ शाखासु पतितांस्तिर्य्यक्प्रहा-
रान्विवृतास्थिगं । सीव्यं तस्म्यग्निवेश्याशुसन्ध्यस्थीन्यनुपूर्व्वशः ॥ बद्ध्वा वेल्लितकेनाशु तत-
स्तैलेन सेचयेत् । चर्मणागोफणावन्धः कार्य्यो यो वा हितोभवेत् ॥ पृष्ठेव्रणो यस्य भवेदु-
त्तानं शाययेत्तु तं ॥ अतोऽन्यथा चोरसिजे शाययेत्पुरुषं व्रणे । छिन्नां निःशेषतः शा-
खान्दग्धातैलेनवुद्धिमान् ॥ बध्नीयात्कोशबन्धेन प्राप्तं कार्य्यञ्च रोपणं । चन्दनं पद्मकं
रोध्रमुत्पलानि प्रियङ्गवः ॥ हरिद्रा मधुकञ्चैव पयःस्यादत्र चाष्टमं । तैलमेभिर्विपक्वान्तु
प्रधानं व्रणरोपणं ॥ चन्दनं कर्कटाख्या च सहे मांस्याह्वयास्मृते । हरेणवो मृणालञ्च त्रि
फला पद्मकोत्पलम् ॥ त्रयोदशाङ्गं त्रिवृतमेतद्वा पयसान्वितम् । तैलं विपक्वं सेकार्थे हि-
तं तु व्रणरोपणे ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि भिन्नानान्तु चिकित्सितं । भिन्नं नेत्रमकर्मण्यम-
भिन्नं लम्बते तु यत् ॥ तन्निवेश्य यथास्थानमव्याविद्धशिरं शनैः । पीडयेत्पाणिना सम्य-
क् पद्मपत्रान्तरेण तु ॥ ततोऽस्य तर्पणं कार्य्यं नस्यं चानेन सर्पिषा । आजं घृतं क्षीरपात्रं
मधुकं चोत्पलानि च ॥ जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्विपाचयेत् । सर्व्वनेत्राभिघाते तु
सर्पिरेतत्प्रशस्यते ॥ उदरान्मेदसो वर्त्तिर्निर्गता यस्य देहिनः । कषायभस्मसृत्कीर्णां व-
द्ध्वा सूत्रेण सूत्रवित् ॥ अग्नितप्तेन शस्त्रेणच्छिन्द्यान्मधुसमायुतं । बद्ध्वा व्रणं सुजीर्णेन
सर्पिषः पानमिष्यते ॥ स्नेहपानादृते चापि पयःपानं विधीयते । शर्करामधुयष्टिभ्यां ला-
क्षया वा श्वदंष्ट्रया ॥ चित्रासमन्वितञ्चैव रुजादाहविनाशनं । आटोपोमरणं वा स्या-
च्छूलोवाऽच्छिद्यमानया ॥ मेदोग्रन्थौ च यत्तैलं वक्ष्यते तच्च योजयेत् । त्वचोऽतीत्यसिरा
दीनिभित्वा वा परि हृत्य वा । कोष्ठेप्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान् । तत्रान्तर्लो
हितं पाण्डुं शीतपादकराननं ॥ शीतोच्छ्वासं रक्तनेत्र मानद्धञ्च विवर्ज्जयेत् । आमाश-
यस्थे रुधिरे वमनं पथ्यमुच्यते ॥ पक्वाशयस्थे देयञ्च विरेचनमसंशयं । आस्थापनञ्च निः
स्नेहं कार्य्यमुष्णैर्विशोधनैः ॥ यवकोलकुलत्थानां निःस्नेहेन रसेन च ॥ भुञ्जीतान्नं य.
वागूवा पिबेत्सैन्धवसंयुतां ॥ अतिनिस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् । स्वमार्गप्रति
पन्नास्तु यस्य विण्मूत्रमारुताः॥ व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः । अभिन्न
मन्त्रं निःक्रान्तं प्रवेश्यं नान्यथाभवेत् ॥ पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ।
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः॥प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैश्शनैः॥प्रवेश
येत्क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम्॥ अङ्गुल्याभिमृशेत्कण्ठं जलेनोद्वेजयेदपि । हस्तपा

देषु संरुह्यसमुत्थाप्य महाबलाः भवत्यन्तःप्रवेशस्तु यथा निर्व्वुनुयुस्तथा। तस्मान्त्राणि विश-
न्त्यन्तःस्वाङ्गुलं पीडयन्ति च व्रण। स्वल्पत्वाद्बहुत्वाद्वा दुःप्रवेशं भवेत्तु यत्। तदापाट्य प्रमा-
णेन भिषगन्त्रं प्रवेशयेत्॥ यथास्थानं निविष्टे च व्रणं सिव्येदतन्द्रितः। स्थानादपेतमादत्ते प्रा-
णान् गुम्फितमेव वा॥ वेष्टयित्वातु पट्टेन घृतसेकं प्रदापयेत्। घृतं पिबेत्सुखोष्णञ्च चित्रातैल-
समन्वितं॥ मृदुक्रियार्थं शक्नतो वायोश्चाधःप्रवृत्तये। ततस्तैलमिदं कुर्य्याद्रोपणार्थं चिकित्स-
क॥ त्वचोऽश्वकर्णधवयोर्म्मोचकोऽस्थपश्रृङ्गयोः। शल्लकार्ज्जुनयोश्चापि विदार्य्याः क्षीरिणां-
तथा बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत्। व्रणं संरोपयेत्तेन वर्षमात्रं यतेत च॥ पादौ
निस्सारसुष्कस्य जलेन प्रोक्ष्य चाक्षिणो। प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत्ततः परं॥ कार्य्यो
गोफणिकाबन्धः कट्यामावेश्य यन्त्रकं। न कुर्य्यात्स्नेहसेकाश्च तेन क्लिद्यति हि व्रणः का-
लानुसार्य्यागुर्व्वेला जातीचन्दनपद्मकैः। शिलादार्व्यमृतातुल्यैस्तैलं कुर्व्वीत रोपणं॥ शि-
रसोऽपहृते शल्ये बालवर्त्तिं प्रवेशयेत्। बालवर्त्यामदत्तायां मस्तुलुङ्गं व्रणात्स्रवेत्॥ ह-
न्याद्देनं ततो वायुस्तस्मादेवमुपाचरेत्। व्रणे रोहति चैकैकं शनैर्बालमपक्षिपेत्॥ गा-
त्रादापहृतेऽन्यस्मात्स्नेहवर्त्तिं प्रवेशयेत्। कृते निःशोणिते चापि विधिः सद्यः
क्षते हितः॥ दूरावगाढाः सूक्ष्माः स्युर्येव्रणास्तान्विशोणितान्। कृत्वा सूक्ष्मेण नेत्रेण
चक्रतैलेन तर्पयेत्॥ समङ्गां रजनीं पद्मां त्रिवर्गं तुल्यमेव च। वडङ्गं कटुकां पथ्यां गुडू-
चीं सकरञ्जिकां॥ संहृत्य विपचेत्क्वाले तैलं रोपणमुत्तमं। तालीशं पद्मकं मांसी हरेणु
गुरुचन्दनं॥ हरिद्रे पद्मबीजानि सोशीरं मधुकञ्च तैः। पक्वं सद्योव्रणेषूक्तं तैलं रोपण
मुत्तमं॥ क्षते क्षतविधिः कार्य्यः पिच्चिते भग्नवद्विधिः। घृष्टे रजो निगृह्याशु चूर्णैरुपा
चरेद्व्रणं॥ विश्लिष्टदेहं पतितं मथितं हतमेव च। वासयेत्तैलपूर्णायां द्रोण्यां मांसरसा
शनं॥ अयमेव विधिः कार्य्यः क्षीणे मर्म्महते तथा। रोपणे सपरीषेके पाने च व्रणिनां स
दा॥ तैलं घृतं वा संयोज्यं शरीरत्तूनवेक्ष्य हि। घृतानि यानि वक्ष्यामि यत्नतः पित्तवि
द्रधौ॥ सद्योव्रणेषु देयानि तानि वैद्येन जानता। सद्यःक्षतव्रणं वैद्यः सशूलं परिषेच
येत्॥ सर्पिषा नातिशीतेन बलातैलेन वा पुनः। समङ्गां रजनीं पद्मां पथ्या तुल्यं सुव-
र्णलां॥ पद्मकं रोध्रमधुकं विडङ्गानि हरेणुकम्। तालीशपत्रं नलदं चन्दनं पद्मकेशरं॥
मञ्जिष्ठोशीरलाक्षाश्च क्षीरिणा चापि पल्लवान्। पियालवीजं तिन्दुक्यास्तरुणानि फला-
नि च॥ यथालाभं समाहृत्य तैलमेभिर्विपाचयेत्। सद्योव्रणानां सर्व्वेषामदुष्टानान्तु रो-
पणं॥ कषायमधुराः शीतःक्रियाःस्निग्धाश्चयोजयेत्। सद्योव्रणानां सप्ताहं पश्चात्पूर्व्वोक्तमाच
रेत्॥ दुष्टव्रणेषु कर्त्तव्यमूर्द्धं चाधश्च शोधनं। विशोषणं तथाहारः शोणितस्य च मोक्षणं॥
कषायं राजवृक्षादौ सुरसादौ च धावनं। तयोरेव कषायेण तैलं शोधनमिष्यते॥ क्षार-
कल्पेन वा तैलं क्षारद्रव्येन साधितं। द्रवन्ती चिरविल्वश्च दन्ती चित्रकमेव च॥ पृथ्वी-

का निम्बपत्राणि कासीसं तुत्थमेव च। त्रिवृत्तेजोवती नीली हरिद्रे सैन्धवं तिलाः॥
भूमिकदम्बः सुवहाशुकाख्या लाङ्गलाह्वया। नेपाली जालिनी चैव मदयन्ती मृगादनी॥
सुधामूर्वार्ककोटारिहरितालकरञ्जिकाः। यथोपपत्ति कर्त्तव्यं तैलमेतैस्तु शोधनं॥ घृतं
वा यदि वा प्राप्तं कल्काः संशोधनास्तथा। सैन्धवं त्रिवृदेरण्डपत्रकस्तु वातिके॥ त्रिहरि
द्रामधुककल्कः पैत्ते तिलैर्युतः। कफजे तिलतेजाह्वा दन्तीस्वर्जिकचित्रकाः॥ दुष्टव्रणवि-
धिः कार्यो मेहकुष्ठव्रणेष्वपि॥ षड्विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः॥ नातः श-
क्यं परं वक्तुमपि निश्चितवादिभिः। उपसर्गैर्निपातैश्च तत्तु पण्डितमानिनः। केचित्संयो
ज्य भाषन्ते बहुधा मानगर्विताः॥ बहु तद्भाषितं तेषां षट्स्वेष्वेवावतिष्ठते। विशेषा
इव सामान्यं षट्त्वन्तु परमं मतम्॥

## तृतीयोऽध्यायः॥

अथातो भग्नानां चिकित्सितं व्याख्यास्यामः

अल्पाशिनोऽनात्मवतो यन्तोर्वातात्मकस्य च। उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सि-
ध्यति॥ लवणं कटुकं क्षारमम्लं मैथुनमातपं। व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च॥
शालिर्मांसरसः क्षीरं सर्पिर्यूषः सतीनजः। बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता॥
मधुकोडुम्बराश्वत्थपलाशककुभत्वचः। वंशसर्ज्जवटानां वा कुशार्थमुपसंहरेत्॥ आलेपना
र्थं मञ्जिष्ठां मधुकं रक्तचन्दनं। शतधौतघृतोन्मिश्रं शालिपिष्टञ्च संहरेत्॥ सप्ताहादथ
सप्ताहात्सौम्येष्वृतुषु बन्धनं। साधारणेषु कर्त्तव्यं पञ्चमे पञ्चमेऽहनि॥ आग्नेयेषु त्र्यहात्कुर्य्या
द्भग्नदोषवशेन वा। तत्रातिशिथिलं बद्धे सन्धिस्थैर्यं न जायते॥ गाढेनापि त्वगादीनां
शोफो रुक् पाक एव च। तस्मात्साधारणं बन्धं भग्ने शंसन्ति तद्विदः॥ न्यग्रोधादि-
कषायन्तु सुशीतं परिषेचने। पञ्चमूलीविपक्वन्तु क्षीरं कुर्य्यात्सवेदने। सुखोष्णमवचार्य्य-
स्वा चक्रतैलं विजानता॥ विभज्य कालं दोषञ्च दोषघ्नौषधसंयुतं। परिषेकं प्रदेहञ्च वि-
दध्याच्छीतमेव च॥ गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितं। शीतलं लाक्षया युक्तं प्रा-
तर्भग्नः पिबेन्नरः॥ सुव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः। प्रतिसार्य्य कषायैस्तु शेषं भग्न
वदाचरेत्॥ प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत्। अल्पदोषस्य जन्तोस्तु काले च शि-
शिरात्मके॥ प्रथमे वयसि त्वेवं मासात्सन्धिः स्थिरो भवेत्। मध्यमे द्विगुणात्कालादुत्तरे
त्रिगुणात्स्मृतः॥ अवनामितमुन्नह्य दुन्नतं चावपीडयेत्। आञ्छेदतिक्षिप्तमधो गतं चो-
परि वर्त्तयेत्॥ आञ्छनैः पीडनैश्चैव संक्षेपैर्बन्धनैस्तथा। सन्धीन् शरीरे सर्वांस्तु चलान
प्यचलानपि॥ एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान् भिषक्। उत्पिष्टमथ विश्लिष्टं स-
न्धिं वैद्यो न घट्टयेत्॥ तस्य शीतान् परिषेकान् प्रदेहांश्चावचारयेत्। अभिघाते हते स-

न्धिः स्वां याति प्रकृतिं पुनः । घृतदग्धेन पट्टेन वेष्टयित्वा यथाविधि । पट्टोपरि कुशा-
न्दत्वा यथावद्बन्धमाचरेत ॥ प्रत्यङ्गभग्नस्य विधिरत ऊर्द्ध्वं प्रवक्ष्यते । नखसन्धिं समुत्पि-
ष्टं रक्तानुगतमारया । अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत्॥भग्नां वा सन्धिमुक्तां वा
स्थापयित्वाङ्गुलीं समं । अणुनानेन पट्टेन घृतसेकं प्रदापयेत् ॥ अभ्यज्य सर्पिषा पादं
तलभग्नं कुशोत्तरं । वस्त्रपट्टेन बध्नीयान्नच व्यायाममाचरेत् ॥ अभ्यज्यायामयेज्जङ्घामू-
रुञ्च सुसमाहितः । दत्वा वृक्षत्वचः शीता वस्त्रपट्टेन वेष्टयेत् ॥ मतिमांश्चक्रयोगेन आञ्छे-
दूर्द्ध्वमस्थि निर्गतम् स्फुटितं पिच्चितं चापि बध्नीयात् पूर्ववद्भिषक्॥आञ्छेदूर्द्ध्वमधो वापि कटी-
भग्नन्तु मानवं । ततः स्थानस्थितं सन्धौ वस्तिभिः समुपाचरेत् । पर्शुकास्वथ भग्नासु घृ-
ताभ्यक्तस्य तिष्ठतः । दक्षिणास्वथ वा वामास्वनुमृज्य निबन्धनीः ॥ ततः कवलिकान्दत्वा
वेष्टयेत् सुसमाहितः । तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरं॥ सपलेनोत्क्षिपेत्कक्षामंस
सन्धौ विसंहते । स्थानस्थितञ्च बध्नीत स्वस्तिकेन विचक्षणः ॥ कौर्परन्तु तथा सन्धिमङ्गु-
ष्ठेनानुमार्जयेत् । अनुमृज्य ततः सन्धिं पीडयेत्कर्पराच्युतं ॥ प्रसार्याकुञ्चयेच्चैनं स्नेहसेक-
ञ्च दापयेत् । एवं जानुनि गुल्फे च मणिबन्धे च कारयेत ॥ उभे तले समे कृत्वा तलभ-
ग्नस्य देहिनः । बध्नीयादामतैलेन परिषेकञ्च कारयेत् ॥ प्राग्गोमयमयं पिण्डं धारयेन्मृस-
यं ततः । हस्ते जातबले चापि कुर्य्यात्पाषाणधारणं ॥ सन्न मुन्नमयेत्स्विन्नमक्षकं मुष-
लेन तु । तयोन्नतं पीडयेच्च बध्नीयाद्गाढमेव च ॥ ऊरुवद्वापि कर्त्तव्यं बाहुभग्नचिकि-
त्सितम् ॥ ग्रीवायां तु विवृत्तायां प्रविष्टायामधोऽपि च । अवटावथ हन्वोश्च प्रगृह्योन्नम-
येन्नरं ॥ तथा कुशान् समं दत्वा वस्त्रपट्टेन वेष्टयेत् । उत्तानं शाययेच्चैनं सप्तरात्रमत-
न्द्रितः ॥ हन्वस्थिनी समानीय हनुसन्धौ विसंहते । स्वेदयित्वा स्थिते सम्यक् पञ्चाङ्गीं
वितरेद्भिषक् ॥ वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितम् ॥ अभग्नांश्चलितान्दन्तान् स-
रक्तानवपीडयेत्॥तरुणस्य मनुष्यस्य शीतैरालेपयेद्बहिः॥सिद्धाम्बुभिस्ततः शीतैः सन्धानीयै-
रुपाचरेत् । उत्पलस्य च नालेन क्षीरपानं विधीयते ॥ जीर्णस्यतु मनुष्यस्य वर्ज्जयेच्चलि-
तान् द्विजान् । नासांसन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया॥ पृथङ्नासिकयोर्नाड्यौ
द्विमुख्यौ सम्प्रवेशयेत् । ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ भग्नं कर्णञ्च बध्नीयात्स-
मं कृत्वा घृतप्लुतम् । सद्यः क्षतविधानञ्च ततः पश्चात्समाचरेत् ॥ मस्तुलुङ्गादिना भिन्ने
कपाले मधुसर्पिषी । दत्वा ततो निबध्नीयात्सप्ताहञ्च पिबेद्घृतम् ॥ पतनादभिघाताद्वा
शूनमङ्गं यदक्षतम् । शीताम्रदेहान्सेकांश्च भिषक् तस्यावचारयेत् ॥ अथ जङ्घोरुभग्नानां
कपाटशयनं हितम् । कीलका बन्धनार्थञ्च पञ्चकार्य्या विजानता ॥ यथा न चलनं तस्य
भग्नस्य क्रियते तथा । सन्धेरुभयतो द्वौ द्वौ तले चैकश्च कीलकः ॥ श्रोण्यां वा पृष्ठवंशे
वापक्ष्यस्यक्षकयोस्तथा । भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् । सन्धीयिरविमुक्तांस्तु-

स्निग्धान् स्विन्नांम्मृदूकृतात् । उक्तैर्विधानैर्बुद्ध्या च सम्यक् प्रकृतिमानयेत् । काण्डभग्ने प्ररूढे तु विषमोल्वणसंहिते । आपीड्य शमयेद्भग्नं ततो भग्नवदाचरेत् ॥ कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः । सन्ध्युक्ते वा क्रियां कुर्य्यात्सद्योव्रणभग्नवत् ॥ ऊर्द्धकाये-तु भग्नानां मस्तिक्यं कर्णपूरणं । घृतपानं हितं नस्यं शाखास्वनुवासनं ॥ अत ऊर्द्ध्व-प्रवक्ष्यामि तैलं भग्नस्य साधकं । रात्रौ रात्रौ तिलान्कृष्णान्वासयेदस्थिरे जले ॥ दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् । तृतीयं सप्तरात्रं वा भावयेन्मधुकाम्बुना ॥ ततः क्षीरे पुनः पीतान्सुशुष्कांश्चूर्णयेद्भिषक् ॥ काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां-तथा । कुष्टं सर्जरसं मांसीं सुरदारु सचन्दनं ॥ शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् । पीडनार्थञ्च कर्त्तव्यं सर्व्वगन्धशृतं पयः ॥ चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् । एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥ रोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिवां । शैलेयकं क्षीरशुक्लामनन्तां समधुलिकां ॥ पिष्ट्वा शृङ्गाटकञ्चैव पूर्वोक्तान्यौषधानि च । एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥ एतत्तैलं सदापथ्यं भग्नानां सर्व्वकर्म्मसु । आक्षेपके पक्षाघाते तालुशोषे तथार्द्दिते ॥ मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे । बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने । ग्रीवास्कन्धोरसां वृद्धिरसृनैवोपजायते ॥ मुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणं । गन्धतैलमिदं नाम्ना सर्व्ववातविकारनुत् ॥ राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः । लपसाच्चप्रियालानां तैलानि मधुरैः सह ॥ वसां दत्वा यथालाभं क्षीरे दशगुणे पचेत् । स्नेहोत्तरमिदं चाशु कुर्य्याद्भग्नप्रसाधनं ॥ पानाभ्यञ्जनमस्येषु वस्तिकर्म्मणि सेचने । भग्नेनैति यथापाकं प्रयतेन तथाभिषक् ॥ पक्वमांससिराज्ञायु तद्धि कृच्छ्रेण सिध्यति । भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्वणं ॥ सुखचेष्टाप्रचारञ्च संहितं सम्यगादिशेत् ॥

## चतुर्थोऽध्यायः ॥

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।

आमाशयगते वाते च्छर्दयित्वा यथाक्रमम् । देयः षड्धरणीयोगः सप्तरात्रं सुखाम्बुना ॥ चित्रकेन्द्रयवौ पाठा कटुकातिविषाभया । वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ पक्वाशयगते चापि देयं स्नेहविरेचनम् । वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः । श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहृक्रमः ॥ स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च । त्वङ्मांसासृक् सिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणं ॥ स्नेहोपनाहाग्निकर्म्मबन्धनोन्मर्दनानि च । स्नायुसन्ध्यस्थिसंप्राप्ते कुर्य्याद्वायावतन्द्रितः ॥ निरुद्धेऽश्मनि वा वायौ पाणिमन्थेन दारिते नाडीं दत्वाश्मनि भि।

षक् चूषयेत्तत्र वा बली ॥ शुक्रप्राप्तेऽनिले कार्य्यं शुक्रदोषचिकित्सितं । अवगाहकुटीकर्ष प्रस्तराभ्यङ्गवस्तिभिः ॥ बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः । सुप्तिवातेऽसृङ्मोक्षं कुर्य्यात्तु बहुशो भिषक् ॥ दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः । पञ्चमूलीशृत क्षीरं फलाम्लो रस एव च ॥ सुस्निग्धो धान्ययूषो वा हितो वातविकारिणां । काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ॥ सानूपौदकमांसस्तु सर्व्वस्नेहसमन्वितः । सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः ॥ तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणां कुञ्चमानं रुजार्त्तं वा गात्रं स्तब्धमथापि वा ॥ गाढं पट्टैर्निबध्नीयात् क्षौमकार्पासकौर्णिकैः । विडालनकुलोष्ट्राणां चर्म्मगोध्यामृगस्य वा ॥ प्रवेशयेद्वा स्वभ्यक्तं शाल्वणोपनाहितं । स्कन्धवक्षस्त्रिकप्राप्तं वायुं मन्यागतं तथा ॥ वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितं । शिरोगतं शिरोवस्तिर्हन्ति वाश्वविमोचणं ॥ स्नेहमात्रासहस्रन्तु धारयेत्तत्र योगतः । सर्वाङ्गगतमेकाङ्गस्थितं वापी समीरणं ॥ हन्ति केवलो वस्तिर्वायुवेगमिवाचलः । स्नेहस्वेदस्थाभ्यङ्गो वस्तिः स्नेहविरेचनं ॥ शिरोवस्तिः शिरःस्नेहो धूमः स्नैहिक एव च । सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च ॥ रसाः क्षीराणि मांसानि स्नेहाः स्नेहान्वितश्च यत्। भोजनानि पायसाम्लानि स्निग्धानि लवणानि च ॥ सुखोष्णाश्च परिषेकास्तथा संवाहनानि च । कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च ॥ कौशेयौर्णिकरोमाणि कार्पासानि गुरूणि च । निवातातपयुक्तानि तथा गर्भगृहाणि च मृद्वी शय्याग्निसन्तापो ब्रह्मचर्य्यं तथैव च । समासेनैवमादीनि योज्यान्यनिलरोगिषु ॥ त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गानामक्षसमाः कल्काः विल्वमात्रः करकस्तिल्वकमूलकम्पिल्लकयोस्त्रिफलारसदधिपात्रे द्वे द्वे घृतपात्रमेकं तदैकध्यं संसृज्य विपचेत्तिल्वकसर्पिरेतत् स्नेहविरेचनमुपदिशन्ति वातरोगिषु । तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः ॥ तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वावक्षुद्य महति कटाहे पानीये आप्लाव्य क्वाथयेत्ततः स्नेहमम्बुपृष्ठाद्यदुदेति तत्सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापञ्च स्नेहपाककल्पेन विपचेदेतदणुतैलमुपदिशन्ति वातरोगिषु । अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम् ॥ अथ महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितमुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्म निहत्तां भूमिं विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽभ्यासिच्य तत्र यत्तैलमुत्तिष्ठेत्तत्पाणिभ्यां पर्य्यादाय स्वनुगुप्तं निदध्यात् । ततस्तैलं वातहरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं विपचेद्यावता कालेन शक्नोति पक्तुं प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धावातघ्नानि च तस्मिन् सिध्यति शङ्खानाध्मापयेद्दुन्दुभिं घातयेच्छत्रं धारयेद्वालव्यजनस्वी-

जयेद्ब्राह्मणसहस्रं भोजयेत् तत्साधु सिद्धमवतार्य्य सौवर्णे राजते मृन्मये वा पात्रे स्वनुगुप्तं निदध्यात्तदेतत् सहस्रपाकमप्रतिवारवीर्य्यं राजार्हं तैलमेवं भागशतविपक्वं शतपाकम् ॥ गन्धर्व्वहस्तकमुष्ककनक्तमालाटरूषकपूतीकारग्वधचित्रकादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेदेतत्पत्रलवणमुपदिशन्ति वात रोगेषु ॥ पत्रलवणम् ॥ एवं मुष्ककाण्डवार्त्ताकुशिग्रुलवणानि संक्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेदेतत्स्नेहलवणमुपदिशन्ति वातरोगेषु ॥ काण्डलवणम् ॥ गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयीकृष्णगन्धानीपनिर्दहन्यटरूषकनक्तमालकपूतिक 'वृहतीकण्टकारिकाभल्लातकेङ्गुदी वैजयन्तीकदलीवर्षाभूक्षुवेरचुरकेन्द्रवारुणीश्वेतमोचकाशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह संसृष्टं पूर्व्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेदेतत्प्रतिवापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्वा ॥ इत्येतत्कल्याणकलवणं वातरोगेषु गुल्मप्लीहाग्निसङ्गाजीर्णार्शोऽरोचकार्त्तानां कासादिभिरुपद्रुतानां चोपदिशन्ति पानभोजनेष्विति ॥ भवति चात्र ॥ विष्यन्दनादुष्णभावाद्दोषाणाञ्च विपाचनात् । संस्कारपाचनाच्चेदं वातरोगेषु शस्यते ॥

## पञ्चमोऽध्यायः ॥

अथातो महावातव्याधिचिकित्सितं व्याख्यास्यामः ।

द्विविधं वातशोणितमुत्तानमवगाढञ्चेत्येके भाषन्ते तत्तु न सम्यक्कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढीभवति तस्मान्न द्विविधम् ॥ तत्र बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वातरक्तनिमित्तां वेदनां जनयतीति वातरक्तं तत्तु पूर्व्वं हस्तपादयोरवस्थानं कृत्वा पश्चाद्देहं व्याप्नोति । तस्य पूर्व्वरूपाणि तोददाहकण्डुशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनिस्पन्दनसक्थिदौर्बल्यानि श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात्पाणिपादतलाङ्गुलिगुल्फप्रभृतिषु ॥ तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्तस्तस्य लक्षणमुक्तं तत्राप्रतिकारिणो वैकल्यं भवति ॥ भवति चात्र ॥ प्रायशः सुकुमाराणां मिथ्याहारविहारिणां । स्थूलानां सुखिनां चापि वातरक्तं प्रकुप्यति ॥ तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरेणसङ्कोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत्॥ तत्रादावेव बहुवातरुक्षम्लानाङ्गादृते मार्गावरणाद्दुष्टशोणितमसकृदल्पाल्पमवसिञ्चेद्वातकोपभयात्ततो वमनादिभिरुपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं वातप्रबले पुराणघृतं पाययेदजाक्षीरं चार्द्धतैलं मधुकाक्षयुक्तं शृगालविन्नासिद्धं वा शर्करामधुमधुरंश्च पटोलशृङ्गाटककशेरु-

सिद्धं वा श्यामारास्नामुषवीश्रृगालविन्नापीलुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा द्विपञ्च-मूलीक्वाथ ष्टगुणसिद्धेन च पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्क-प्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत शतावरीमयूरकमधुकक्षीरविदारीबलातिब-लातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतिवापं बलातैलं शतपाकञ्चेति॥ वातहर मूल सिद्धेन च पयसा परिषेचनमम्लेन वा कुर्वीत॥ यवमधुकैरण्डतिलवर्षाभूमिर्वाप्रदेहः कार्य्यः। तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोली क्षीरकाकोली जीवकर्षभ-कबलातिबलाबिसमृणालशृगालविन्नामेषशृङ्गीपियालशर्कराकशेरुकसुरभिवचाकल्कमि-श्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः॥ स्नैहिकफलसारो-त्कारिका वा॥ चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु विचित्रमत्स्यपिशितवेशवारो वा॥ बिल्व पेशिकातगरदेवदारुसरलारास्नाहरेणुकुष्ठशतपुष्पासुरादधिमस्तुयुक्त उपनाहः॥ मातुलुङ्गाम्लसैन्धवघृतमिश्रो मधुशिग्रुमूलमालेपे तिलकल्कश्चेति वातप्रबले॥ पित्तप्रब-ले द्राक्षारेवतकट्फलपयस्योमधुकचन्दनकाश्मर्य्यकषायं शर्करामधुमधुरं पाययेत्। शता-वरीमधुकपटोलत्रिफलाकटुरोहिणीकषायं गुडूचीकषायं वा पित्तज्वरहरचन्दनादिकषा-यं शर्करामधुमधुरं तिक्तकषायमिद्धं वा सर्पिः॥ बिसमृणालभद्रश्रियपद्मककषायेणार्द्ध-क्षीरेण परिषेकः॥ क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषयमिश्रैर्मस्तुम-धुधान्याम्लैर्जीवनियसिद्धेन वा सर्पिषाभ्यङ्गः॥ शतधौतघृतेन वा काकोल्यादिक-ल्कविपक्वेन वा सर्पिषा शालिषष्टिकनलवंजुलतालिशशृङ्गाटकगलोड्यगौरीगैरिकशैवल-पद्मकप द्मपत्रप्रभृतभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः। वातप्रबलेऽप्येष सुखोष्णः प्रदेहः का-र्य्यः॥ रक्तप्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत् शीततमाश्च प्रदेहाः कार्य्या इति॥ श्लेष्मप्रब-ले त्वामहकहरिद्राकषायं मधुमधुरं पाययेत्॥ त्रिफलाकषायं वा मधुकशृङ्गवेरहरीतकीति-क्तरोहिणीकल्कं वा सक्षौद्रमूत्रं तोयेनगुडहरीतकीं वा भक्षयेत्॥ तैलमूत्र क्षारोदसुराशुक्त-कफघ्नौषधनिःक्वाथैः परिषेकः॥ आरग्वधादिकषायैर्वोष्णैः। मस्तुमूत्रसुराशुक्तमधुकसारिवा पद्मकसिद्धं वा घृतमभ्यङ्गः। तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्रा-णि क्षारमूत्रपिष्टः प्रदेहः। श्वेतसर्षपकल्कः तिलाश्वगन्धाकल्कः प्रियालसेलुकपित्थत्वक् कल्कः मधुशिग्रपुनर्नवाकल्कः व्योषतिक्तापृथक्पर्णीबृहतीकल्क इत्येते पञ्च प्रदेहाः सु-खोष्णाः क्षारोदकपिष्ठाः॥ शालपर्णी पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तपयोमिश्राः॥ संसर्गे सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्य्यात्॥ सर्व्वेषु गुडहरीतकीं वा सेवेत पिप्पलीर्वा क्षीरपिष्टावा वारिपिष्टावा पञ्चाभिवृद्धा दशाभिवृद्धा वा पिबेत्क्षीरौदनाहारो दशरात्रं भूयश्चापकर्षयेदेवं यावत्पञ्चदश चेति तदेतत्पिप्पलीवर्द्धमानकं वातशोणितविषमज्वरा-रोचकपाण्डुरोगप्लीहोदरार्शः कासश्वासशोफशोषाग्निसादहृद्रोगोदराण्युपहन्ति॥ जी-

वनीयप्रतिवापं सर्पिः पयसा पाचयित्वाऽभ्यञ्जेत् ॥ सहामहदेवाचन्दनमूर्वासुस्ताप्रियाल-शतावरीकशेरुपद्मकमधुकशतपुष्पाकुष्ठानि क्षीरपिष्टः प्रदेहो घृतमण्डयुक्तः ॥ सैरेयका-टरूषकबलातिबलाजीवन्तिसुषवीकल्को वा छागक्षीरपिष्टः ॥ काश्मर्य्यमधूकपर्णकल्को-वा मधूच्छिष्टमञ्जिष्ठसर्ज्जरससारिवाक्षीरसिद्धं पिण्डतैलमभ्यङ्गः ॥ सर्वेषु च पुराणघृत-मामलकरसविपक्वं वा पानार्थे ॥ जीवनीयसिद्धं परिषेकार्थे काकोल्यादिकषायकल्कसिद्धं वा ॥ सुखकषायसिद्धं वा कारवेल्लकषायसाधितं वा ॥ बलातैलं वा परिषेकावगाह-वस्तिभोजनेषु शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयू-षेणवानाम्लेन ॥ शोणितमोक्षञ्चाभीक्ष्णं कुर्वीत । उच्छ्रितदोषे च वमनविरेचनास्थाप-नानुवासनकर्म्म कर्त्तव्यम् ॥ भवन्ति चात्र ॥ एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखं । वा-तासृक् साध्यते वैद्यैर्य्याप्यते तु चिरोत्थितं ॥ उपनाहपरोषेकप्रदेहाभ्यञ्जनानि च । शरणा-न्यप्रवातानि मनोज्ञानि महान्ति च ॥ मृदुगण्डोपधानानि शयनानि सुखानि च । वातर-क्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥ व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनं । दिवास्वप्न-मभिष्यन्दि गुरु चान्नं विवर्जयेत् ॥ अपतानकिनमस्रस्ताक्षमकम्भ्रुवमस्तब्धमेढ्रमस्वेदन-मवेपनमप्रलापिनमखट्वापातिनमवहिरायामिनं चोपक्रमेत् ॥ तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीडनेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थं । अनन्तरञ्च विदारिगन्धादिकाथ-मांसरसक्षीरदधिपक्वं सर्पिरच्छं पाययेत् तथा हि नाति मात्रं वायुः प्रसरति । ततो भ-द्रदार्व्वादित्वा तन्नगणमाहृत्य सयवकोलकुलत्थमानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य त-मादाय कषायमम्लक्षीरैः सहोन्मिश्रा सर्पिस्तैलवसामज्जाभिः सह विपचेन्मधुरकप्रती-वापं तदेतत्त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विद-ध्यात् । यथोक्तैश्च स्वेदविधानैः स्वेदयेत् । बलीयसि वाते सुखोष्णे तुषबुसकरीषपूर्णे कूपे निदध्यादामुखात् ॥ तप्तायां वाङ्गारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत् । कृशरावेशवारपायसैर्वा स्वेदयेत् ॥ मूलकोरुबूकस्फूर्जार्ज-कार्कशमलाशङ्खिनो स्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यं । अभुक्तवता पीतमम्लं दधिमरिचवचायुक्तमपतानकं हन्ति तैलसर्पिर्वसाक्षौद्राणि च ॥ एतच्छुद्धवा-तापतानकविधानमुक्तं संसृष्टे संसृष्टं कर्त्तव्यं ॥ वेगान्तेषु चावपीडं दद्यात् । ताम्र-चूडकर्कटकृष्णमत्स्यशिशुमारवराहवसाश्चासेवेत । क्षीराणि वा वातहरसिद्धानि यव-कोलकुलत्थमूलकदधिघृततैलसिद्धां वा यवागूं स्नेहविरेचनास्थापनानुवासनैश्चैनं दश-रात्राहतवेगमुपक्रमेत् ॥ वातव्याधिचिकित्सितं चावेक्षेत रक्षाकर्म च कुर्य्यादिति ॥ प-क्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं चोपक्रमेत् । तत्र प्रागेव स्ने-हस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपविधानेनोपच-

रेत्। वैशेषिकश्चात्र मस्तिष्कशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थे शाल्वणमुपनाहार्थे बलातैल-मनुवासनार्थे। एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत ॥ मन्यास्तम्भेऽप्येतदेव विधानं विशेषतो वातश्लेष्महरैर्नस्यैरूचस्वेदैश्चोपचरेत् ॥ अपतन्त्रकातुरं नापतर्पयेत्। वमनानुवासनास्थापनानि न निषेवेत ॥ वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रधमापनैर्मोचयेत्। तुम्बुरुपुष्कराख्यहिंग्वम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत् पथ्याशतार्द्धे सौवर्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धं वातश्लेष्मापनुत्त्व कर्म कुर्य्यात् ॥ अर्दितातुरं बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपचरेद्वैशेषिकैश्च मस्तिष्कशिरोवस्तिनस्य धूमोपनाहस्नेहनाडीस्वेदादिभिः। ततः सद्यणं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवोदककन्दांश्च संहृत्य द्विगुणोदके क्षीरद्रोणे निक्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थेनोन्मिश्य पुनरग्नावधिश्रयेत् ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमन्थीयात्तत्रयः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेदेतत्क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यं ॥ तैलहीनं वा क्षीरसर्पिरत्रचितपर्णमिति ॥ गृध्रसीविश्वाचीक्रोष्टुकशिरः खञ्जपङ्गुलवातकण्टकपाददाहपादहर्षाववाहुकवाधिर्य्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशञ्च सिराव्यधं कुर्य्यादन्यत्राववहुकाद्वातव्याधिचिकित्सितं चावेक्षेत ॥ कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यादजामूत्रं मधुतैलानि वा मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं शुक्तसुरातक्रमूत्रलवणसिद्धं वा॥नाड़ीस्वेदैश्च स्वेदयेत्। वातव्याधिचिकित्सां चावेक्षेत। भूयश्चोत्तरे वक्ष्यामः॥ तूणीप्रतूण्योः स्नेहलवणमुदकेन पाययेत् पिप्पल्यादिचूर्णं वा हिङ्गुयवक्षारप्रगाढं वा सर्पिर्वास्तिभिश्चैनमुपक्रमेत् ॥ आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्त्तिक्रियापाचनीयवस्तिभिरुपचरेत् । लङ्घनानन्तरं चान्नकाले धान्यकजीरकादि दीपनसिद्धान्यन्नानि ॥प्रत्याध्माने छर्दनापतर्पणदीपनानि कुर्य्यात् ॥ अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत्क्रियाविभाग इति ॥ हिंगुत्रिकटुवचाजमोदाधन्याजगन्धादाडिमतिन्तिडीकपाठाचित्रकयवक्षारसैन्धवविडसौवर्चलस्वर्जिकापिप्पलीमूलाम्लवेतसशठीपुष्करमूलहपुषाचव्याजाजिपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रां गुटिकां कारयेत्ततः प्रातरेकैकां वातविकारीभक्षयेत्। अथैषयोगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरवस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूणीप्रतूणीरपहन्ति ॥ भवन्ति चात्र ॥ केवलो दोषयुक्तो वा धातुभिर्वावृतोऽनिलः। विज्ञेयो लक्षणोहाभ्यां चिकित्सा वाऽविरोधतः ॥ रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः। करोति यस्य तं वैद्यः शोथवत्समुपाचरेत् ॥ कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते। तदाङ्गमर्दशैथिल्यरोमहर्षरुजाज्वरैः ॥ निद्रया चार्दितौ स्तब्धौ शीतलावप्रचेतनौ।

गुरुकाववस्थिरावूरू न स्वाविव च मन्यते ॥ तमूरुस्तम्भमित्याहुराढ्यवातमथापरे । स्नेह-
वर्ज्जं पिबेत्तत्र चूर्णं षट्धरणं नरः ॥ हितमुष्णाम्बुना तद्वत्पिप्पल्यादिगणैः कृतं । लिह्या-
द्वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितं ॥ मूत्रैर्वा गुग्गुलुं श्रेष्ठं पिबेद्वापि शिलाजतु । त-
तो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनं ॥ हृद्रोगमरुचिं गुल्मं तथाभ्यन्तरविद्रधिं । स-
क्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ॥ कुर्य्यादुद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥ भोज्याः
पुराणश्यामाककोद्रवोद्दालकशालयः ॥ शुष्कमूलकयूषेण पटोलस्य रसेन वा । जाङ्गलैरघृतैर्मां-
सैः शाकैश्चालवणैर्हितैः ॥ यदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी । तदा स्नेहादिकं
कर्म पुनरत्रावचारयेत् ॥ सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसः । कटुपाकः सरो-
हृद्यो गुग्गुलुः स्निग्धपिच्छिलः ॥ स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः । तैक्ष्ण्यौष्ण्या-
त्कफवातघ्नः सरत्वान्मलपित्तनुत् ॥ सौगन्ध्यात्पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः । त-
स्मात्त्रिफलादार्वीपटोलकुशवारिभिः ॥ पिबेदावाप्य वा मूत्रैः क्षारेणोदकेन वा ।
जीर्णे यूषरसक्षीरैर्भुञ्जानो हन्ति मासतः ॥ गुल्मं मेहमुदावर्त्तमुदरं सभगन्दरम् । क्रिमि-
कण्डूरुचिश्वित्राण्यर्बुदग्रन्थिमेव च ॥ नाड्याढ्यवातश्वयथुकुष्ठदुष्टव्रणांश्च सः । कोष्ठसन्धि-
स्थितं वायुं वृक्षमिन्द्राशनिर्यथा ॥

## षष्ठोऽध्यायः ॥

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।

चतुर्विधोऽर्शसां साधनोपायः ॥ तद्यथा भेषजं क्षारोऽग्निः शस्त्रमिति तत्राचिरका-
लजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि मृदुप्रसृतावगाढान्युच्छ्रितानि क्षारेण ।
कर्कशस्थिरपृथुकठिनान्यग्निना ॥ तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण । तत्र भे-
षजसाध्यानामर्शसामदृश्यानाञ्च भेषजं भवति क्षाराग्निशस्त्रसाध्यानान्तु विधानमुच्य-
मानमुपधारय ॥ ॥ तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदना-
भिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य सम्भृते शुचौ देशे साधा-
रणेऽभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्व्वकायमु-
त्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्तग्रीवासक्थं परि-
कर्म्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मिन् घृताभ्यक्तं यन्त्रमृज्वणुसुखं पा-
यौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय प्रविष्टे चार्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्र-
योरन्यतरेण प्रमृज्य क्षारं पातयेत् पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शत-
मात्रमुपेक्षेत ततः प्रमृज्य क्षारबलं व्याधिबलञ्चावेक्ष्य पुनरालेपयेत् । अथार्शः पक्वजाम्ब-
वप्रतीकाशमभिसमीक्ष्यावसन्नमीषन्नतमुपावर्त्तयेत् ॥ क्षारं प्रक्षालयेद्धान्याम्लेन दधि-

मस्तुशुक्तफलाम्लैर्वा ततो यष्टीमधुकमिश्रेण सर्पिषा निर्व्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परिषिञ्चेदशीताभिरित्येके ॥ ततो निर्वातमागारं प्रवेश्याचारिकमादिशेत् सावशेषं पुनर्दहेत् । एवं सप्तरात्रात्सप्तरात्रादेकैकमुपक्रमेत तत्र बहुषु पूर्व्वं दक्षिणं साधयेद्दक्षिणाद्वामं वामात्पृष्ठजं ततोऽग्रजमिति ॥ तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत् क्षारेणैव मृदुना पित्तरक्तनिमित्तानि । तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि ॥ अतिदग्धे तु गुदावदरणं दाहो मूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति ॥ श्यामाल्पव्रणता कण्डुरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्याशान्तिर्हीनदग्धे ॥ महान्ति च प्राणवतश्छित्त्वा दहेत् । निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्रादिना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणालेपक्षाराग्निशस्त्रैरुपाचरेत् ॥ प्रवृत्तरक्तानि च रक्तपित्तविधानेन भिन्नपुरीषाणि चातिसारविधानेन बद्धवर्चांसि स्नेहपानविधानेनोदावर्त्तविधानेन बद्धवर्चांसि स्नेहपानविधानेनोदावर्त्तविधानेन वा । एष सर्व्वस्थानगतानामर्शसां दहनकल्पः ॥ आसाद्य च दर्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत् । भ्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म प्रयुञ्जीत सर्वेषु च शालिषष्टिकयवगोधूमान्नं सर्पिः स्निग्धमुपसेवेत पयसा निस्तुषयूषेण पटोलयूषेण वा यथादोषशाकैर्वा सुवर्चलातण्डुलीयकजीवन्त्युपोदिकाश्वबलाबालमूलकपालंक्यसनचिल्लीचुचूकलायवल्लीभिरन्यैर्वा ॥ यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषञ्च तदुपसेवेत ॥ दग्धेषु चार्शस्स्वक्ष्यतोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थञ्च स्नेहादीनां सामान्यतो विशेषतस्तु क्रियापथमुपसेवेत ॥ सर्पींषि च दीपनीयवातहरसिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिबेत् ॥ पित्तार्शसस्तु पृथक्पर्ण्यादीनां कषायेण दीपनीयप्रतीवापं भद्रदार्वादिपिप्पल्यादिसर्पिः ॥ शोणितार्शसस्तु मञ्जिष्ठामुरङ्ग्यादीनां कषायेश्लेष्मार्शसस्तु सुरसादीनां कषाये सर्पिः । उपद्रवांश्च यथास्वमुपचरेत् ॥ परञ्च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्तद्विभ्रमाद्धि षाण्ढ्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि भवन्ति मरणं वा ॥ अत ऊर्द्ध्वं यन्त्रप्रमाणमुपदेक्ष्यामः । तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां षडङ्गुलपरिणाहं नारीणां तलायतं तद्द्विच्छिद्रं दर्शनार्थमेकं छिद्रमेकं छिद्रन्तु कर्म्मणि । एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति ॥ छिद्रप्रमाणन्तु त्र्यङ्गुलायतमङ्गुष्ठोदरपरिणाहं यदङ्गुलमवशिष्टं तस्याद्‌र्द्धाङ्गुलमधस्तादर्द्धाङ्गुलोच्छ्रितोपरि वृत्तकर्णिकमेतद्यन्त्राकृतिसमासः ॥ अत ऊर्द्ध्वमर्शसामालेपान्वक्ष्यामः ॥ स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः ॥ कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः ॥ दन्तीचित्रकसुवर्चिकालाङ्गली क-

लको वा गोपित्तपिष्टस्तृतीयः ॥ पिप्पलीसैन्धवकुष्ठशिरीषफलकल्कैः स्नुहीक्षीरपिष्टोऽर्क-क्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः ॥ कासीसहरितालसैन्धवा श्वमारकविडङ्गपूतीककृतवेधनजम्बूकार्कोत्तमारणीदन्तीचित्रकालर्कस्नुहीपयः सुतैलं विपक्वमभ्यञ्जनेनार्शः शातयति ॥ अतऊर्द्धं मदृश्येष्वर्शस्सु योगान्पातनार्थंवक्ष्यामः ॥ प्रात प्रातर्गुडहरीतकी मासेवेत ॥ ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरीतकीशतं प्रातःप्रातर्यथाबलमुपयुञ्जीत क्षौद्रेण ॥ अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः ॥ शतावरीमूलकल्कं वा क्षीरेण ॥ चित्रकचूर्णयुक्तं वा सीधुपरार्द्धं । भल्लातचूर्णयुक्तं वा सक्तुमन्थमलवणं तक्रेण ॥ कलशे वान्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत । एषएव मार्ग्यास्फोतायवान्यामलकगुडूचीषु तक्रकल्पः । पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्ववदेव निरन्नो वा तक्रमहरहर्मासमुपसेवेत ॥ शृङ्गवेरपुनर्नवाचित्रककषायसिद्धं वा पयः ॥ कुटजमूलत्वक्फाणितं वा पिप्पल्यादि प्रतीवापं क्षौद्रेण ॥ वा तव्याध्युक्तं हिंग्वादिचूर्णमुपसेवेत तत्राहारः क्षीरहारो वा । क्षारलवणांश्चित्रकमूलक्षारोदकसिद्धान्वा कुल्माषान्भक्षयेत् ॥ चित्रकमूलक्षारोदकसिद्धं वा पयः ॥ पलाशतरुक्षार मिद्धान्वा कुल्माःमाषान् । पाटलापामार्गबृहती पलाशक्षारं वा परिस्तुतमहरहर्घृतसंसृष्टम् ॥ कुटजवन्दाकीमूलकल्कं वा तक्रेण ॥ चित्रकपूतिकनागरकल्कं वा पूतीकक्षारेण क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापं ॥ कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातःप्रातरनुसेवेतशीतोदकानुपानं एभिरभिवर्द्धतेऽग्निरर्शांसि चोपशास्यन्ति ॥ द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्यजल चतुर्द्रोणे विपाचयेत् । ततः पादावशिष्टं कषायमादाय सुशीतं गुडतुलयासह्योन्मिश्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्लेततः प्रातः प्रातर्मात्रां पाययेत तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्त्तारोचका न भवन्ति दीप्तोग्निश्च भवति ॥ पिप्पलीमरिचविडङ्गलवालुकलोध्राणां द्वे द्वे पले इन्द्रवारुण्याः पञ्चपलानि कपित्थमध्यस्य दशपथ्याफलानामर्द्धप्रस्थः प्रस्थो धात्रीफलानामेतदेकध्यं जलचतुर्द्रोणे विपाच्य पादावशेषं परिस्राव्यसुशीतं गडतुलाद्वयनोऽऽमिश्याघृतभाजने निःक्षिप्य पक्षमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्यथा बलमुपयुञ्जीत । एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरक्रमिहरो बलवर्णकरश्चेति ॥ तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धं ॥ पित्तजेषु विरेचनं । एवं रक्तजेषु संशमनं । कफजेषु शृङ्गवेरकुलत्थोपयोगः । सर्वदोषहरं यथोक्तं सर्व्वजेषु यथा स्वौषधसिद्धं वा पयः सर्वेष्विति ॥ अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः ॥ भल्लातकानिपरिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्ति-

मनुष्याणां घृताभ्यक्ततालुजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत्तावद्यावत्पञ्चेति ततःपञ्चपञ्चाभिवर्द्धयेद्यावत्सप्ततिरिति प्राप्यच सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्व्व कुष्ठार्शोभिर्विमुक्तो बलवान रोगः शतायुर्भवति॥ द्विव्रणीयोक्तेन विधानेन भल्लातकनिर्य्यातितं स्नेहमादाय प्रातः शुक्तिमात्रमुपयुञ्जीत जोर्णे पूर्व्ववदाहारः फलप्रकर्षश्च॥ भल्लातकमज्जाभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तोनिवातमागारं प्रविश्य यथा बलं प्रसृतं प्रकुञ्चं चोपयुञ्जीत॥ तस्मिन् जिर्णे क्षीरं सर्पिरोदन इत्याहारः॥एवं मासमुपयुज्य मासत्रयमादिष्टाहारो रक्षेदात्मानं॥ ततः सर्वोपतापानपहृत्य वर्णवान् बलवान् श्रवणग्रहणधारणशक्तिसम्पन्नो वर्षशतायुर्भवति। मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति। एवं दशमासानुपयुज्य वर्षसहस्रायुर्भवति॥ भवन्ति चात्र॥यथा सर्वाणि कुष्ठानि हतःखदिरवीजकौ।तथैवार्शांसिसर्वाणि वृक्षकारुष्करौ हतः॥ असाध्या नातिवर्त्तन्ते प्रमेहा रजनीं यथा।क्षाराग्निन्नातिवर्त्तन्ते तथा दृष्ट्वा गुदोद्भवाः॥ घृतानि दीपनीयानि लेहायस्कृतयः सुरा॥ आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम्॥वेगावरोधस्त्रीपृष्ठयानान्युत्कटुकासनं। यथास्वन्दोषलं चान्नमर्शःसु परिवर्जयेत्॥

## ॥ सप्तमोध्यायः ॥

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः।

अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः। औषधैस्तरुणःसाध्यः प्रवृद्धश्छेदमर्हति॥ तस्य पूर्बेषु रूपेषु स्नेहादिक्रम इष्यते। तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः॥ पाषाणभेदो वसुको वशिराश्मन्तको तथा। शतावरी श्वदंष्ट्रा च वृहतीकण्टकारिका॥कपोतवङ्कार्त्तगलः ककुभोशीरकुब्जकः। वृक्षादनी भल्लुकश्च वरुणः शाकजं फलं॥ यवाः कुलत्थाः कोलानि कतकस्य फलानि च। उषकादिप्रतिवापमेषां क्वाथैर्घृतं कृतं॥ भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव तु। क्षारोन्यवागूयूषांश्च कषायाणिपयांसि च॥ भोजनानि च कुर्वीतवर्गेऽस्मिन्वातनाशने। कुशः काश सरो गुन्द्राउत्कटो मोरटोऽश्मभित्॥वरी विदारीवाराही शालिमूलत्रिकण्टकंभल्लूकः पाठलापाठापत्तूरोऽथकुरुण्टिका पुनर्न वाशिरीषश्च क्वथितास्तेषु साधितं। घृतं शिलाजमधुकवीजैरिन्दीवरस्य च॥ त्रपुसैर्वारुकादीनां विजैश्चावापितं शुभं। भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु॥ क्षारान्यवागूर्यूषांश्च कषायाणि पयांसि च। भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने॥ गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः। कुष्ठभद्रादिमरिचचित्रकैः ससुराह्व

यैः ॥ एतैः सिद्धमश्मासपिं रूषकादिगणेन च । भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥ क्षारान्यवागूर्यूषांश्च कषायाणि पयांसि च । भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने पिचुकाङ्कोलकतकशाकेन्दीवरजैः फलैः । चूर्णितैः सगुडं तोयं शर्कराशमनं पिवेत् ॥ क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमुलिका । अजमोदा कदम्बस्य मूलं नागरमेव च ॥ पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा । त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतं ॥ अविक्षीरेण सप्ताहमश्मरीभेदनं पिवेत् । द्रव्याणान्तु घृतोक्तानां क्षारोऽवीमूत्रगालितः ॥ ग्राम्यसत्वशकृत्क्षारैः संयुक्तः साधितः शनैः । तत्रोषकादिरावापः ॥ कार्य्यस्त्रिकटुकान्वितः ॥ एष क्षारोऽश्मरीं गुल्मं शर्कराञ्च भिनत्त्यपि । तिलापामार्गकदलीपलाशयववल्कजः ॥ क्षारः पेयोऽवमूत्रेण शर्करानाशनः परः । पाटलाकरवीराणां क्षारमेवं समाचरेत् ॥ श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाक्षसमं पिवेत् । सहैडकाख्यौ पेयौ वा शोभाञ्जनकमार्कवौ ॥ कपोतवङ्कामूलं वा पिवेदम्लसुरादिभिः । मत्सिद्धं वा पिवेत्क्षीरं वेदनाभिरुपद्रुतः ॥ हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा । सर्व्वथैवोपयोज्यः स्यात्तृणपञ्चमूलादिकः ॥ घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः । यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः ॥ कुशलस्यापि वैद्यस्य यतः सिद्धिरिहध्रुवा । उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः ॥ अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् । तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा ॥ अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्न शरीरं भुक्तवन्तं कृतवलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य ततो बलवन्तमविक्लवमाजानुसमेफलके प्रागुपवेश्य पुरुषञ्च तस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानमुन्नतकटीकं वस्त्रधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेणशाटकैर्वा ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनावपीडयेदधोनाभेर्य्यावदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्तरमानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीडयेदङ्गुलिभ्यां यथा ग्रन्थिरिवोन्नतं शल्यं भवति ॥ सचेदुद्गृहीतशल्ये तु विवृताक्षो विचेतनः । हतवन्नम्बशीर्षश्च निर्व्विकारो मृतोपमः ॥ न तस्य निर्हरेच्छल्यं निर्हरेत्त् म्रियेत सः । विनात्वेतेषु रूपेषु निर्हर्त्तुं समुपाचरेत् ॥ सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वावचारयेत् शस्त्रमश्मरी प्रमाणं दक्षिणतो वा क्रियासौकर्य्यहेतोरित्येके॥तथाच न भिद्यते चूर्ण्यते वा तथाप्रयतेत चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति तस्मात्समस्तामग्रवक्त्रेणादद्दीत ॥ स्त्रीणान्तु वस्ति पार्श्वगतो गर्भाशयः सन्निकृष्टः तस्मात्तासामुत्सङ्गवच्छस्त्रं पातयेदतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत् ॥

पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणं ॥ अश्मरी व्रणाहते भिन्नो वस्तिरेकधा न भवति द्विधा भिन्नवस्तिराश्मरिको न सिध्यति ॥ अश्मरीव्रणनिमित्तमेकधाभिन्न वस्तिर्जीवति क्रियाभ्यासात् शास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति। उद्धृतशल्यं तूष्णोदकद्रोण्यामवताय्य स्वेदयेत्तथा हि वस्तिरसृजा न पूर्य्यते पूर्णे वा क्षीरवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥ भवति चात्र ॥ क्षीरवृक्षकषायन्तु पुष्पनेत्रेण योजितं। निर्हरेदश्मरीं तूर्णं रक्तं वस्तिगतञ्च यत् ॥ मूत्रमार्गविशोधनार्थं चास्मै गुडसौहित्यं वितरेत्। उद्धृत्यचैनां मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां यवागूं पाययेदुभयकालं त्रिरात्रं त्रिरात्रादूर्द्धं गुड़प्रगाढेन पयसा मृद्वोदनमल्पं भोजयेद्दशरात्रं मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थञ्च दशरात्रादूर्द्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत् ॥ ततो दशरात्रं चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रव्यस्वेदेन वा। क्षीरवृक्षकषायेण वास्य व्रणं प्रक्षालयेत् ॥ रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिग्राहयेत् ॥ एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्कं व्रणाभ्यञ्जनमिति। स्थानशोणितं चोत्तरवस्तिभिरुपाचरेत्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरेन्मधुरकषायैरिति ॥ यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरामुक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवं चाशक्ये विदार्य्य वा नाडी शस्त्रेण वड़िशेनोद्धरेत् । रूढव्रणश्चाङ्गनाखनगनागरथद्रुमान्नारोहेत वर्षं नाप्सु प्लवेत भुञ्जीत वा गुरु ॥ मूत्रवहशुक्रवहमुष्कस्रोतो मूत्रप्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः शुक्रवहच्छेदान्मरणं क्लैव्यं वा। मुष्कस्रोतउपघाताद्ध्वजभङ्गः मूत्रप्रसेकक्षणनान्मूत्रक्षरणं। सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः वस्तिगुदविलक्षणं प्रागुक्तमिति ॥ भवतश्चात्र ॥ मर्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणां। व्यापादयेद्बहून्मर्त्त्यान् शस्त्रकर्मा पटुर्भिषक् ॥ सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदं मूत्रसेकं मूत्रवहं मूत्रवस्तिस्तथाष्टमः ॥

## अष्टमोऽध्यायः ॥

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः।

पञ्च भगन्दराः व्याख्यातास्तेष्वसाध्यः शम्बुकावर्त्तः शल्यनिमित्तश्चेति शेषाः कृच्छ्रसाध्याः ॥ तत्र भगन्दरपिडकोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्कपिडकं। पक्केषु चोपस्निग्धमवगाह स्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्य पराचीनमवाचीनं वा वहिर्मुखमन्तर्मुखं वा ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण ॥ अन्तर्मुखे चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भ-

गन्दरमुखमासाद्यैषणीं दत्वा शस्त्रं पातयेत् ॥ आसाद्य वाग्निक्षारं चेत्येतत्सामान्यं सर्व्वेषु॥ विशेषतस्तु ॥ नाड्यन्तरे व्रणान् कुर्य्याद्भिषक् तु शतपोनके । ततस्तेषूपरूढेषु शेषा नाडीरूपाचरेत्॥गतयोऽन्योऽन्यसम्बद्धा वाह्याश्छेद्यास्त्वनेकधा । नाडीरनभिसम्बद्धा यश्छिनत्त्येकधा भिषक्॥स कुर्य्याद्विवृतं जन्तोर्व्रणंगुदविदारणं।तस्य तद्विवृतं मार्गं विण्मूत्रमनुगच्छति॥ आटोपगुदशूलञ्च करोति पवनो भृशं।तत्राधिगततन्त्रोऽपिभिषङ्मुह्येदसंशयं ॥ तस्मान्न विवृतः कार्य्यो व्रणस्तु शतपोनके।व्याधौ तत्र बहुच्छिद्रे भिषजा वै विजानता॥अर्द्धलाङ्गलकश्छेदः कार्य्योलाङ्गलकोऽपि वा।सर्व्वतोभद्रकोवापि कार्य्यो गोतीर्थकोऽपि वा॥द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलकोमतः।ह्रस्वमेकतरं यच्च सोऽर्द्धलाङ्गलकः स्मृतः ॥ सेवनीं वर्जयित्वा च चतुर्द्धा दारिते गुदे। सर्व्वतोभद्रकं च्छेदमाहुश्छेदविदो जनाः ॥ पार्श्वागतेन शस्त्रेण छेदो गोतीर्थको भवेत् । सर्वतः स्रावमार्गांस्तु दहेद्वैद्यस्तथाग्निना ॥ सुकुमारस्य भीरोर्हि दुष्करः शतपोनकः। रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत् ॥ स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरापायसादिभिः । ग्राम्यानूपौदकैर्म्मांसैर्लावाद्यैर्वापि विष्किरैः ॥ वृचादनीमथैरण्ड विल्वादिञ्च गणं तथा । कषायं सुकृतं कृत्वा स्नेहकुम्भे निषेचयेत् ॥ नाडीस्वेदेन तेनास्य तं व्रणं स्वेदयेद्भिषक् । तिलैरण्डातसीमाषयवगोधूमसर्षपान् । लवणान्यम्लवर्गञ्च स्थाल्यामेवोपसाधयेत् ॥ आतुरं स्वेदयेत्तेन तथा सिध्यति कुर्वतः । स्विन्नञ्च पाययेदेनं कुष्ठञ्च लवणानि च ॥ वचाहिङ्ग्वजमोदञ्च समभागानि सर्पिषा । मार्द्वीकेनाथ वाम्लेन सुरासौरीरकेणवा । ततो मधुकतैलेन तस्य सिञ्चेद्भिषग्व्रणं ॥ परिषिञ्चेद्गुदं चास्य तैलैर्वातरुजापहैः। विधिनानेन विण्मूत्रं स्वमार्गमधिगच्छति ॥ अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः॥शतपोनक आख्यात उष्ट्रग्रीवेक्रियां शृणु । अथोष्ट्रग्रीवमेषित्वाच्छित्वा क्षारं निपातयेत्।पूतिमांसव्यपोहार्थम ग्निरत्र न पूजितः । अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत् ॥ बन्धं ततोऽनुकुर्वीत परिषेकन्तु सर्पिषा।तृयीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक् ।। ततःशुद्धं विदित्वा च रोपयेत्तु यथा क्रमं।उत्कृत्य।स्रावमार्गन्तु परिस्राविणि बुद्धिमान्।क्षारेणवा।स्रावगतिं दहेद्वा तवह्नेनवा ॥ सुखोष्णेनाणुतैलेन सेचयेद्गुदमण्डलं । उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः ॥ वामनीयौषधैः कार्य्याः परिषेकाश्च मात्रया । मृदुभूतं विदित्वैनमल्पस्रावरुगन्वितं ॥ गतिमन्विष्य शस्त्रेण छिन्द्यात्खर्ज्जूरपत्रकं । चन्द्रार्द्धं चन्द्रचक्रञ्च सूचीमुखमवाङ्मुखं ॥ छित्वाग्निना दहेत्सम्यगेवं क्षारेण वा पुनः । ततः संशोधनैरेवं मृदुपूर्वैर्विशोधयेत् ॥ वहिरन्तर्मुखश्चापि शिशोर्य्यस्य भगन्दरः । तस्याहितं विरेकाग्निशस्त्रक्षारावचारणं ॥ यद्यन्मृदु च तीक्ष्णञ्च तत्तत्तस्यावचारयेत् । आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतं॥अग्रवर्त्तिं प्रणिहितं व्रणानां शोधनं हितं । योगोऽयं नाशयत्याशु गतिं मेघमिवानिलः ॥ आग

न्तु ज भिषङ्नाडी शस्त्रेणोत्क्रत्य यत्नतः । जाम्बोष्ठेनाग्निवर्णेन तप्तया वा शलाकया ॥ दहेद्यथोक्तं मतिमांस्तं व्रणं सुसमाहितः । क्रमिघ्नञ्च विधिं कुर्य्याच्छल्यानयनमेव च ॥ प्रत्याख्यायेष चारभ्या वर्ज्यश्चापि त्रिदोषजः । एतत्कर्म समाख्यातं सर्वेषामनुपूर्वशः ॥ एषान्तु शस्त्रपतनाद्वेदना यत्र जायते । तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते॥वातघ्नौ-षधसंपूर्णां स्थालीं छिद्रशराविकां । स्नेहाभ्यक्तगुदस्तत्रामध्यासीत सवाष्पकां ॥ नाड्या वास्याहरेत्स्वेदं शयानस्य रुजापहं । उष्णोदकेऽवगाह्यो वा तथा शाम्यति वेदना ॥ कदलीमृगलोपाकप्रियकाजिनसंस्मृतान् । कारयेदुपनाहांश्च शाल्वणादीन् विचक्षणः ॥ कटुत्रिकं वचाहिङ्गुलवणान्यथ दीप्यकं । पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः ॥ ज्योतिष्मतीलाङ्गलकोश्यामादन्तीत्रिवृत्तिलाः । कुष्टं शताह्वा गोलोमी तिल्वको गिरिकर्णिका ॥ कासीसकाञ्चनक्षीर्य्यौ वर्गः शोधन इष्यते । त्रिवृत्तिलानागदन्तीमञ्जिष्ठाः पयसा सह ॥ उत्सादनं भवेदेतत्सैन्धवक्षौद्रसंयुतं । रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ॥ त्रिवृत्तेजोवतीदन्तो कल्को नाड़ीव्रणापहः । कुष्ठं त्रिवृत्तिला दन्तीमागध्यः सैन्धवं मधु । रजनो त्रिफला तुल्यं हितं स्याद्व्रणशोधनं । मागध्यो मधुकं रोध्रं कुष्ठमेलाहरेणवः ॥ समङ्गा धातकी चैव सारिवा रजनीद्वयं । प्रियङ्गवः सर्जरसः पद्मकं पद्मकेसरं ॥ सुधां वचां लाङ्गलकीं मधूच्छिष्टं ससैन्धवं । एतत्संभृत्य सम्भारान् तैलं धीरो विपाचयेत् । एतद्धि गण्डमालासु मण्डलेष्वथ मेहिषु । रोपणार्थं हितं तैलं भगन्दर विनाशनं ॥ न्यग्रोधादिगणश्चैव हितः शोधनरोपणे । तैलं घृतं वा तत्पक्वं भगन्दरविनाशनं ॥ त्रिवृद्दन्तीहरिद्रार्कमूलं लोहाश्ममारकौ। विड़ङ्गसारं त्रिफला स्नुह्यर्कपयसी मधु ॥ मधूच्छिष्टससायुक्तैस्तैलमेतैर्व्विपाचयेत् । भगन्दरविनाशार्थमेतद्योज्यं विशेषतः ॥ चित्रकार्कौ त्रिवृत्पाठे मलपं हयमारकं । सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्चिकां ॥ ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् । एतद्धि स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥ शोधनं रोपणं चैव सवर्णकरणं यथा । हिव्रणीयमवेक्षेत व्रणावस्थासु बुद्धिमान्ः छिद्रादूर्द्ध्वं हरेदोष्टमर्शोयन्त्रस्य यन्त्रवित् । ततो भगन्दरे दद्यादेतदर्द्धेन्दुसन्निभं ॥ व्यायामं मैथुनं कोपं पृष्ठयानं गुरूणि च । संवत्सरं परिहरेदुपरूढव्रणो नरः ॥

## नवमोऽध्यायः ॥

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ।

विरुद्धाध्यशनासात्म्यवेगविघातैः स्नेहादीनां चायथारम्भैः पापक्रियया पुराकृतकर्म्मयोगाच्च त्वग्दोषो भवति ॥ तत्र त्वगदोषी मांसवसादुग्धदधितैलकुलत्थमाषनिष्पावेक्षुविकाराम्लविरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवास्वप्नं व्यवायञ्च परिहरेत् ॥

ततः शालिषष्ठिकयवगोधूमकोरदूषश्यामाकोद्दालकादीन् नवान् भुञ्जीत मुद्गाढ़क्यो-
रन्यतरस्य यूषेण सूपेन वा निम्बपत्रारुष्करव्यामिश्रेण मण्डूकपर्णीवल्गुजाटरूषककुषि-
कापुष्पैः सर्पिः सिद्धैः सर्षपतैलसिद्धैर्वा तिक्तवर्गेण वाभिहितेन॥ मांससात्म्याय वा जा-
ङ्गलमांसमदस्कं वितरेत्। तैलं वज्रकमभ्यङ्गार्थे। आरग्वधादिकषायमुत्सादनार्थे।
पानपरिषेकावगाहादिषु च खदिरकषायमित्येष आहाराचारविभागः॥ तत्र पूर्व्वरूपे-
षूभयतः संशोधनमासेवेत॥ तत्र त्वक् सम्प्राप्ते शोधना लेपनानि॥ शोणित प्राप्ते सं-
शोधनालेपनकषायपानशोणितावसेचनानि। मांसप्राप्ते शोधनालेपनकषायपानशो-
णितावसेचनारिष्टमन्यप्राशाः। चतुर्थं कर्म्मगुणप्राप्तं याप्यमात्मवतः सविधानवतश्च। तत्र
संशोधनाच्छोणितावसेचनाच्चोर्द्ध्वं भल्लातशिलाजतुगुग्गुल्वगुरुतुवरकखदिरासनायस्कृति-
विधानमासेवेत पञ्चमं नैव चोपक्रमेत॥ तत्र प्रथममेव कुष्ठिनं स्नेहपानविधानेनोप-
पादयेत् मेषशृङ्गीश्वदंष्ट्राशार्ङ्गेष्टागुडूची द्विपञ्चमूलीसिद्धं तैलं घृतं वा वात कुष्ठिनां
पानाभ्यङ्गयोर्व्विदध्यात्॥ धवाश्वकर्णककुभपलाशपिचुमर्दपर्प्पटकमधुकरोध्रसमङ्गासि-
द्धं सर्पिः पित्तकुष्ठिनां॥ पियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठसिद्धं श्ले-
ष्मकुष्ठिनां॥ भल्लातकाभयाविड़ङ्गसिद्धं वा सर्व्वेषां। तुवरकतैलं भल्लातक तैलं वेति॥
सप्तपर्णारग्वधातिविषापाठाकटुरोहिण्यमृतात्रिफलापटोलपिचुमर्दपर्पटकदुरालभात्राय-
माणामुस्ताचन्दनपद्मकहारिद्रोपकुल्याविशालामूर्वाशतावरीसारिवेन्द्रयवाटरूषकषड्ग्रन्था
मधुकभूनिम्बगृष्टिका इति समभागाः कल्कः स्यात्कल्काच्च तुर्गुणं सर्पिः प्रक्षिप्य त
द्द्विगुणो धात्रीफलरसस्तच्चतुर्गुणा अपस्तदेकध्यं समालोड्य विपचेदेतन्महातिक्तकं ना
म सर्पिः कुष्ठविषमज्वररक्तपित्तहृद्रोगोन्मादापस्मारगुल्मपिडकासृग्दरगलगण्डगण्डमा
लश्लीपादनपाण्डुरोगविसर्पषाण्ढ्यककण्डूपामादींश्च शमयेदिति॥ त्रिफलापटोलपिचुम
न्दाटरूषककटुरोहिणीदुरालभात्रायमाणा पर्पटकाश्चैतेषां द्विपलिकान् भागान् जलद्रो
णेप्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्द्धपलिकानि त्रायमा-
णामुस्तेन्द्रयवचन्द्रनकिराततिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समवाप्य विपचेदेतत्तिक्तकं
नाम सर्पिः कुष्ठविषमज्वरगुल्मार्शो ग्रहणीदोषशोफपाण्डुरोगविसर्पषाण्ढ्यशमनञ्चेति।
अतोऽन्यतमेन घृतेन स्निग्धस्विन्नस्यैकां द्वे तिस्रश्चतस्रः वा सिराविध्येन्मण्डलानि चो-
त्सन्नान्यवलिखेदभीक्ष्णं प्रच्छयेद्वा। समुद्रफेणशाकगोजीकाडुम्बरिकापत्रैर्वाविघृष्याले-
पयेल्लाक्षासर्जरसाञ्जनप्रपुन्नाडावल्गुजतेजोवत्यश्वमारकार्ककुटजारेवतमूलकल्कैर्मूत्रपि
ष्टैः पित्तपिष्टैर्वा स्वर्जिकातुत्थकासीसविडङ्गागारधूमचित्रककटुकसुधाहरिद्रासैन्धवक-
ल्कैर्व्वा। एतान्येवावाप्यक्षार कल्पेन निस्रुते पलासे क्षारे ततो विपाच्य फाणितमिव
सञ्जातमवतार्य्यलेपयेत्। ज्योतिष्कफललाक्षामरिचपिप्पलीसुमनः पत्रैर्वा हरिताल-

मनःशिलार्कक्षीरतिलशिग्रुमरिचकल्कैर्वा स्वर्जिका कुष्ठतुत्थकुटजचित्रकविडङ्गमरिच-
मनःशिलाकल्कैर्वा   हरीतकीकरञ्जिका।विडङ्गसिद्धार्थकलवणरोचना।वल्गुजहरिद्राक-
ल्कैर्वा ॥ सर्वे कुष्ठापहाः सिद्धालेपाः समप्रकीर्त्तिताः । वैशेषिकानतस्तूर्द्ध दद्रूश्वित्रेषु
मे शृणु ॥ लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं रात्रिर्व्योषं चक्रमर्द्दस्य बीजं । तक्रेणैकस्थं तक्र-
पिष्टः प्रलेपो दद्रूघ्नश्चो मूलकाद्बीजयुक्तः ॥ सिन्धूद्भूतं चक्रमर्दस्य बीजमिक्षूद्भूतं केश-
रं तार्क्ष्यशैलं । पिष्टोलेपोऽयक्षपित्थाद्रसेनदद्रूस्तूर्णं नाशयत्येष योगः ॥ हेमक्षीरीव्याधि-
घातः शिरीषोनिम्बः सर्ज्जो वत्सकः साजकर्णः । शीघ्रं तीव्रानाशयन्तीह दद्रूः स्नाना-
लेपोद्वर्षणेषु प्रयुक्ताः ॥ भद्रासंज्ञोडुम्बरीमूलतुल्यं दत्वा मूलं चोदयित्वा मलपाः । सि-
द्धस्तोयम्पीतमुष्णो सुखोष्णं स्फोटान् श्वित्रे पुण्डरीके च कुर्य्यात ॥ द्वैपं दग्धं चर्म्ममा-
तङ्गजं वाभिन्ने स्फोटे तैलयुक्तं प्रलेपः।पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेको
निहन्ति॥कृष्णस्य सर्पस्य मसी सुदग्धा वैभीतकं तैलमथ द्वितीयं।एत त्समस्तं स्त्रदित प्र
लेपात् श्वित्राणि सर्वाण्यपहन्ति शीघ्रं॥अध्यर्द्धतोये सुमतिस्नुतस्य क्षारस्य कल्येन तु सप्त-
कृत्वः। तैलं शृतं तेनचतुर्गुणेन श्वित्रापहं ब्रणमेतदग्र्यं।घृतेन युक्तं प्रपुनाडबीजं कुष्ठञ्च
यष्टीमधुकञ्चपिष्ट्वा।श्वेताय दद्या द्गृहकुक्कुटाय चतुर्थभक्ताय बुभुक्षिताय॥तस्योपसंगृह्य
च तत्पुरीषमुत्पाचितं सर्व्वत एव लिम्पेत्।अभ्यंन्तरं मासमिमं प्रयोगं प्रयोजयेच्छित्रम-
यो निहन्ति॥क्षारे सुदग्धे गजले गजे तु गजस्य मूत्रेण बहुस्रुते च।द्रोणप्रमाणेदशभाग-
युक्तं दत्वापचेद्बीजमवल्गु जस्य।एनद्यदा चिक्कणतामुपैति तदा समस्ता गुटिका विद-
ध्यात्।श्वित्रं प्रलिम्पेदथ संप्रहृष्य तया व्रजेदाशुसवर्णभावं।।कषायकल्येनसुभावितांस्तु-
दलत्वचं चूतहरतीतकानां।तान्तास्नदीपे प्रणिधाय धामाग्वर्त्तिं वटक्षीरसुभावितांस्तु ।।
आदीप्यतज्जातमसीं गृहीत्वा तां चापि पथ्यामसि भावयित्वा सन्नचितं तद्बहुशः कि
लाशं तैलेन सिक्तं कटुना प्रयाति।। आवल्गुज बीजमग्यन्नदीजं काकाह्वानाडुम्बरी या
च लाक्षा । लौहं चूर्णं मागधीतार्क्ष्यशैलं तुल्याः कार्याः कृष्णवर्णास्तिलाश्च।।वर्त्तिं कृत्वा
तां गवां पित्तपिष्टां लेपः कार्य्यः श्वित्रिणां श्वित्रहारी । लेपात्पित्तं शैखिनं श्वित्रहारि
ह्रीवेरं वा दग्धमेतेन युक्तं ॥ तुत्थोलकटुकाव्योषसिंहा र्कहय मारकाः । कुष्टावल्गुजभ-
ल्लातक्षीरिणीसर्षपाः स्नुही ।। तिल्वकारिष्ट पीलूनां पत्राण्यारग्वधस्य वा । बीजं विड
ङ्गाश्वहन्त्रोर्हरिद्रे बृहतीद्वयं ॥ आभ्यां श्वित्राणि योगाभ्यांलेपान्नश्यन्त्यशेषतः। वायसी
फल्गुतिक्तानां शतं दत्वा पृथक् पृथक् ॥ द्वेलौहरजसः प्रस्थे त्रिफला त्र्याढकं तथा । त्रि
द्रोणेऽपां पचेद्यावदभागौ द्वावसनादपि ॥ शिष्टञ्च विपचेद्भूय एतैः श्लक्ष्णप्रपेषितैः । क
ल्कैरिन्द्रयवव्योषत्वग्दारुचतुरङ्गुलैः॥पारावतपदी दन्तीवाकुचीकेशराह्वयैः । कण्टकार्य्या
च तत्पक्वंघृतं कुष्ठिषु योजयेत् । दोषधात्वाश्रितं पानादभ्यङ्गा त्त्वग्गतं तथा ।। अप्य

साध्यं नृणां कुष्ठं नाम्ना नीलं नियच्छति॥ त्रिफलात्वक् त्रिकटुका सुरसा मदयन्तिका।
वायस्यारग्वधानाश्च तुलां कुर्यात्पृथक् पृथक्॥ काकमाच्यर्कवरुणदन्तीकुटजचित्रकान्।
दार्वीं निदिग्धिकाभ्यान्तु पृथग् दशपलं तथा। त्रिद्रोणेऽपां पचेद्यावत् षट् प्रस्थं परिशेषि
तं॥ शक्तद्रसदधि चोरं मूत्राणां पृथगाढ़कं। तद्वद्घृतस्य तत्साध्यं भूनिम्बव्योषचित्रकैः।
करञ्जफलनोलिकाश्यामावल्गुजपीलुभिः। नीलिनीनिम्बकुसुमैः सिद्धं कुष्ठापहं घृतं॥
स्त्वग्दाढ़ङ्गसावर्ण्यं श्वित्रिणां। जनयेन्नृणाम्भगन्दरंक्रमीनर्शो महानीलं नियच्छति॥ मूत्रंग-
व्यं चित्रकव्योषयुक्तं सर्पिः कुम्भे चौद्रयुक्तं स्थितं हि। पक्षादूर्द्ध्वं श्वित्रिभिः पेयमेतत्
कुर्य्याच्चास्मिन् कुष्ठदिष्टं विधानं। पूतीकार्कास्नुङ्नरेन्द्रद्रुमाणांमूत्रैः पिष्टा पल्लवाःसौमनाश्च।
लेपः श्वित्रंहन्तिदद्रूव्रणांश्चदुष्टान्यर्शांस्येषचाड़्व्रणांश्च॥ अस्मादूर्द्ध्वंनिः स्रुते दुष्टरक्ते जा-
तप्राणं सर्पिषा स्नेहयित्वा। तीक्ष्णैर्योगैश्छर्दयित्वाप्रगाढं पश्चाद्दोषं निर्हरेच्चाप्रमत्तः॥ दुर्व्वान्तो
वादुर्विरिक्तोऽथ वास्यात्कुष्ठीदोषैरुद्धतैर्व्याप्तदेहः सन्दिग्धंयात्यसाध्यत्वमाशुतस्मात्कृत्स्ना-
न्निर्हरेत्तस्यदोषान्। पक्षात्पक्षाच्छर्दनान्यभ्युपेयान्मासात्मासात् स्रंसनंचापिदेयं। स्राव्यं र
क्तं वत्सरे द्विर्द्विरल्पं नस्यं दद्याच्च त्रिरात्रात्त्रिरात्रात्॥ पथ्याव्योषं सेक्षुजातं सतैलंलीढ्वा
शीघ्रं मुच्यते कुष्ठरोगात्। द्वेधात्रीपथ्याचोपकुल्याविडङ्गा चौद्राज्याभ्यासेकतोवावलिह्यात्
पीत्वा मासं वा पलांशांहरिद्रांमूत्रेणान्तं पापरोगस्य गच्छेत्। एवंपेयश्चित्रकः श्लक्ष्णपि
ष्टः पिप्पल्यो वा पूर्व्ववन्मूत्रयुक्ताः॥ तद्वत्ताच्यं मासमात्रञ्च पेयं पेनाजस्रं देहमालेपयेच्च
आरिष्टत्वक् साप्तपर्णी च तुल्या लाक्षा मुस्तं पञ्चमूल्यौ हरिद्रा। मञ्जिष्ठाद्यौ वासका
देवदारुपथ्याबह्णी व्योषधात्रीविडङ्गं। सामान्यांशं योजयित्वाविडङ्गं चूर्णंकृत्वा तत्पलोन्मा
नमश्नन्॥ कुष्ठाज्जन्तुर्मुच्यतेत्रैफलं वा सर्पिर्द्रोणं व्योषयुक्तञ्च युञ्जन्। गोमूत्राम्बुद्रोण
सिद्धेचपोडे सिद्धं सर्पिर्नाशयेच्चापि कुष्ठं॥ आरग्वधे सप्तपर्णे पटोलेसवृक्षके नक्तमाले
सनिम्बे। जीर्णं पक्वं तद्धरिद्राद्वयेन हन्यात्कुष्ठं मुष्कके चापि सर्पिः। रोध्रारिष्टं पद्मकं
रक्तसारः सप्ताह्वाचौ वृक्षको बीजकश्च। योज्याः स्नाने दह्यमानस्यजन्तोः पेया वा स्या-
त् चौद्रयुक्ता त्रिभण्डी॥ खादेत्कुष्ठी मांसपाते पुराणान्मुद्गान् सिद्धान्निम्बतोये सतै-
लान्। निम्बक्वाथं जातसत्वः पिवेद्वा क्वाथं वार्कालर्कसप्तच्छदानां॥ जग्धे पङ्क्ते ष्वश्वमा-
रस्य मूलं लेपो युक्तः स्याद्विड़ङ्गैः समूत्रैः। मूत्रैश्चैनं सेचयेद्भोजयेच्च सर्व्वाहारान् संप्रयु-
क्तान्विडङ्गैः॥ कारञ्जं वा सार्षपं वा च तद्वच्च यत्तैलं शिग्रुकोशा स्त्रयोर्वा पक्वं सवेर्वाकटूष्णैः
सतिक्तैः शेषं च स्याद्दुष्टवत् सन्निधानम्॥ सप्तपर्णकरञ्जार्कमालतीकरवीरजं। स्नुही
शिरीषयोर्मूलं चित्रकास्फोतयोरपि॥ विषलाङ्गलवज्राख्यकासीसालमनःशिलाः।
करञ्जवीजं त्रिकटुत्रिफलां रजनीद्वयं॥ सिद्धार्थकान्विडङ्गानि प्रपुन्नाडञ्च संहरेत्।
मूत्रपिष्टैः पचेदेतैस्तैलं कुष्ठविनाशनं॥ एतद्वज्रकमभ्यङ्गान्नाडीदुष्टव्रणापहं। सिद्धार्थ-

करञ्जौ द्वौ हे हरिद्रे रसाञ्जनं ॥ कुटजश्च प्रपुन्नाडसप्तपर्णी मृगादनी। लाक्षामञ्जरसोऽर्कश्च सा स्फोतारग्वधौ स्नुही। शिरीषस्तुवराख्यस्तु कुटजारुष्करी वचा। कुष्ठं क्रिमिघ्नं मञ्जिष्ठा लाङ्गली चित्रकं तथा ॥ मालती कटुतुम्बीं च गन्धाह्वा मूलकं तथा। सैन्धवं करवीरश्च गृहधूमं विषं तथा ॥ कम्पिल्लकं ससिन्दूरं तेजोह्वातुल्यकाह्वये। समभागानि सर्वाणि कल्क पेष्याणि कारयेत् ॥ गोमूत्रं द्विगुणं दद्यात्तिलतैलाच्चतुर्गुणं ॥ कारंञ्जं वा महावीर्य्यं सार्षपं वा महागुणं ॥ अभ्यङ्गात्सर्वकुष्ठानि गण्डमालाभगन्दरान्। नाडीदुष्टव्रणान् घोरान्नाशयेन्नात्र संशयः ॥ महावज्रकमित्येतन्नाम्ना तैलं महागुणं। पित्तावापे मूत्रपिष्टैस्तु लंगलाद्यादिके कृतं ॥ सप्ताहं कटुकालाव्वा निदधीतचिकित्सकः। पीतवन्तं ततो मात्रां ते नाभ्यन्तश्च मानवं ॥ शोषयेदातपे तस्य दोषा गच्छन्ति सर्वशः। स्रुत दोषं समुत्थाप्य स्नातं खदिरवारिणा ॥ यवागूं पाययेदेनं साधितां खदिराम्बुना। एवं संशोधने वर्गे कुष्ठघ्नेष्वौषधेषु च ॥ कुर्य्यात्तैलानि सर्पींषि प्रदेहोद्‌वर्षणानि च। प्रातःप्रातश्च सेवेत योगान्वैरेचनान् शुभान् ॥ पञ्च षट्सप्तचाष्टौ वा येनत्थानं न गच्छति। कारभं वा पिवेन्मूत्रं जीर्णं तत्क्षीरभोजनं। जातसत्वानि कुष्ठानि मासैः षड्भिरपोहति। दिहञ्चु रक्तं कुष्टस्य खदिरं कुष्ठपीडितः ॥ सर्व्वथैव प्रयुञ्जीत स्नानपानाशनादिषु। यथा हन्ति प्रवृद्धत्वात् कुष्टमातुरमोजसा ॥ तथा हत्त्युपयुक्तस्य खदिरः कुष्ठमोजसा। नांचरोमनखोऽश्रान्तो हिताश्यौषधतत्परः ॥ योषिन्मांसमुरावर्जी कुष्ठकुष्ठमपोहति ॥

## दशमोऽध्यायः ॥

### अथातो महाकुष्ठचिकित्सितं व्याख्यास्यामः।

कुष्ठेषु मेहेषु कफामयेषु सर्व्वाङ्गशोफेषु च दारुणेषु। कृशत्वमिच्छत्सु च मेदुरेषु योगानिमानन्यमतिर्विदध्यात् ॥ घुणान्यवान्निःपूतान् रात्रौ गोमूत्रपर्य्युषितान्महति किलिञ्जे शोषयेदेवं सप्तरात्रं भावयेत् शोषयेच्च ततस्तान् कपालभृष्टान् शक्तून् कारयित्वा प्रातःप्रातरेव कुष्ठिनं प्रमेहिणं वा सालसारादिकषायेण कण्टकिद्रुत्तकषायेण वा पाययेत भल्लातकप्रपुन्नाडावल्गुजार्कचित्रकविडङ्गमुस्तचूर्णचतुर्भागयुक्तान् ॥ एवमेव सालसारादिकषायपरिपीतानामारग्वधादिकषायपरिपीतानां वा गोशकृद्भूतानां वा यवानां शक्तून् कारयित्वा भल्लातकादीनां चूर्णान्यावाप्य खदिराशननिम्बराजवृक्षरोहितकगुडूचीनामन्यतमस्य कषायेण शर्करामधुमधुरेण द्राक्षायुक्तेन दाडिमवेतसाम्लेन सैन्धवलवणान्वितेन पाययेदेष सर्व्वमन्थकल्पः ॥ यावकांश्च भक्ष्यान्धानालुञ्चककुल्माषापूपपूर्णकोशोत्कारिकाशष्कुलिकाकुणावोकोनालिप्रभृतीन् सेवेत ॥ यवविधानेन गोधूमवेणुयवानुपयुञ्जीत ॥ अरिष्टानतो वक्ष्यामः ॥ पूतीकचव्यचित्रकसुरदारुसारिवादन्तीत्रिकटु-

कानां प्रत्येकं षट्पलिका भागा बदरकुवलयस्लिफलाकुडव इत्येतेषां चूर्णानि ततः पिप्पलीमधुघृतैरन्तःप्रलिप्ते घृतभाजने प्राक्कृतिसंस्कारे सत्तोदककुडवानयोरजोऽर्द्ध कुडवम तुलाञ्च गुडस्याभिहितानि चूर्णान्यावाप्य स्वनुगुप्तं कृत्वा यवपल्ले सप्तरात्रं वासयेत्ततो यथाबलमुपयुञ्जीतैषोऽरिष्टः कुष्ठमेहमेदः पाण्डुरोगश्वयथूनपहन्ति ॥ एवं शालसारादौ न्यग्रोधादा वारग्वधादौ वारिष्टान् कुर्व्वीत ॥ आसवानतो वक्ष्यामः ॥ पलाशभस्मपरिस्रुतस्योष्णोदकस्य शीती भूतस्य त्रयोभाग द्वौ फाणितस्यैकध्यमरिष्टकल्पेन विदध्यात्॥ एवं तिलादीनां क्षारेषुशालसारादौ न्यग्रोधादावारग्वधादौ मूत्रेषु चासवान्विदध्यात्॥ अथ सुरा वक्ष्यामः ॥ शिंशपाखदिरयोः सारमादायोत्पाद्य चोत्तमारणीब्राह्मीकोशातकीस्तत्सर्व्वमेकतः कषायकल्पेन विपाच्योदकमाददीत मण्डोदकार्थं किखपिष्टमभिषुणुयाच्च यथोक्तमेवं सुरा ॥ शालसारादौ न्यग्रोधादावारग्वधादौ च विदध्यात्॥ अतोऽवलेहान्वक्ष्यामः ॥ खदिरासननिम्बराजवृक्षशालसार क्वाथितस्सारपिण्डान् श्लक्ष्णपिष्टान् प्रक्षिप्य त्रिपचेत् ततो नातिद्रवं नातिसान्द्रमवतार्य्य तस्य पाणितलपूर्णमप्रातराशी मधुमिश्रं लिह्यादेवं शालसारादौन्यग्रोधादावारग्वधादौ च लेहान्कारयेत् ॥ अतश्चूर्णक्रिया वक्ष्यामः ॥ शालसारादीनां सारचूर्णप्रस्थमाहृत्यारग्वधादिकषायपरिपीतमनेकशः शालसारादिकषायेणैवपाययेत् । एवं न्यग्रोधादीनां फलेषु पुष्पेष्वारग्ववधादीनां चूर्णक्रियां कारयेत् ॥ अत ऊर्द्ध्वमयस्कृतीर्वक्ष्यामः ॥ तीक्ष्णलोहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशालसारादिकषायेण निर्वापयेत् षोडशवारांस्ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्गाढ़तान्तवपरिस्रावितानि ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत । जीर्णे यथाव्याध्यनम्लमलवणमाहारं कुर्व्वीत । एवं तुलामुपयुज्य कुष्ठमेहमेदः श्वयथुपाण्डुरोगोन्मादापस्मारानपहृत्य वर्षशतं जीवति । तुलायां तुलायां वर्षशतगुणोत्कर्षः । एतेन सर्व्वलौहेष्वयस्कृतयो व्याख्याताः ॥ त्रिवृच्छ्यामाग्निमन्थसप्तलाकेवुकशङ्खिनीतिल्वकत्रिफलापलाशशिंशपानां स्वरसमादाय पालाश्यान्द्रोण्यामभ्यसिच्य खदिराङ्गारतप्तमयःक्षपिण्डं त्रिःसप्तकृत्वोनिर्व्वाप्यतमादायापुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत् सिध्यति चास्मिन्पिप्पल्यादिचूर्णभागौ द्वौ मधुनस्तावद्घृतस्येति दद्यात् ततश्चतुर्थभागावशिष्टमवतार्य्य परिस्राव्यभूयोऽग्नितप्तायःपात्राणिप्रक्षिपेत् । ततः प्रशान्तमायसेपात्रे स्वनुगुप्तं निदध्यात्ततो यथायोगंशक्तिं प्रकुञ्च्य चोपयुञ्जीत जीर्णे यथाव्याध्याहारमुपसेवेत ॥ एषौषधायस्कृतिरसाध्यं कुष्ठं प्रमेहं वा साधयति स्थूलमपकर्षति शोफमुपहन्ति सन्नमग्निमुद्धरति विशेषेण चोपदिश्यते राजयक्ष्मिणां वर्षशतायुश्चानया पुरुषो भवति ॥ शालसारादिक्काथमासिच्य पालाश्यां द्रोण्यामयोघनं तप्तं निर्व्वाप्य कृतसंस्कारे कलशेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं क्षौद्रं गु

डमिति च दत्वा अनुगुप्तं निदध्यादेतां मद्योपधायस्कृतिं मासमर्द्धं मासं वा स्थितां यथाबलमुपयुञ्जीत। एवं न्यग्रोधादावारेवतादिषु च विदध्यात्॥ अतः खदिरविधानमुपदेक्ष्यामः॥ प्रशस्तदेशजातमनुपहतमध्यमवयसं खदिरं परितः खानयित्वा मध्यममूलं छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रसग्रहणसमर्थो भवति। ततस्तं गोमयमृदावलिप्तमवकीर्य्य अनैर्गोमयमिश्रैरादीपयेत् यथास्य दह्यमानस्य रसः स्रवत्यधस्तात्यदा जानीयात्पूर्णं भाजनमित्यथैवमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्ततो यथा योगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत जीर्णे भल्लातकविधानवदाहारःपरिहारश्च प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति॥ खदिरसारतुलामुदकद्रोणे विपाच्य षोडशावशांगिष्टमवतार्य्यानुगुप्तं निदध्यात् तमामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत। एष एव सर्व्ववृक्षसारेषु कल्पः॥ खदिरसारचूर्णतुलां खदिरसारक्काथमात्रां वा प्रातः प्रातरुपसेवेतखदिरसारक्काथसिद्धमाविकं वा सर्पिः॥ अमृतवल्ली स्वरसंक्काथं वा प्रातःप्रातरुपसेवेत तत्सिद्धं वा सर्पिः। अपराह्णे ससर्पिष्कमोदनमामलकयूषेणभुञ्जीतैवं मासमुपयुज्य सर्व्वकुष्ठैर्विमुच्यत इति॥ कृष्णातिलभल्लातकतैलामलकरससर्पिषांद्रोणं शालसारादिकषायस्य च त्रिफलात्रिकटुकपरूषफलमज्जविडङ्गफलसाराचित्राक्कीवल्गुजहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकातिविषारसाञ्जनप्रियङ्गूनां पालिकान्भागांस्तानैकध्यं स्नेहपाकविधानेन पचेत् तत्साधुसिद्धमवतार्य्य परिस्राव्यानुगुप्तं निदध्यात् तत उपसंस्कृतशरीरः प्रातः प्रातरुत्थाय पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदकसिद्धं मृद्वोदनमश्नीयात् खदिरोदकसेवीत्येकंद्रोणमुपयुज्य सर्व्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुररोगो भवति॥ भवति चात्र॥ सुरामन्यासवारिष्टांल्लेहांश्चूर्णान्ययस्कृतीः। सहस्रशोऽपि कुर्वीत बीजेनानेन बुद्धिमान्॥

## एकादशोऽध्यायः॥

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः।

द्वौ प्रमेहौ सहजोऽपथ्यनिमित्तश्च भवतः। तत्र सहजो मातृपितृबीजदोषकृतः। अहिताहारजोऽपथ्यनिमित्तः। तयोः पूर्व्वेणोपद्रुतःकृशोरूक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति। उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति॥ तत्र कृशमन्नपानप्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत्। स्थूलमपतर्पणयुक्ताभिः॥ सर्व्व एव च परिहरेयुः सौवीरकतुषोदक शुक्तमैरेयसुरासव तोयपयस्तैलघृतेक्षुविकार दधिपिष्टान्नाम्लपानकानि ग्राम्यानूपौदकमांसानि चेति॥ ततः शालिषष्टिकयवगोधूमकोद्रवोद्दाल-

काननवान्भुञ्जीत । चणकाढ़कीकुलत्थमुद्गविकल्पेन तिक्तकषायाभ्यां शाकगणाभ्यां निकुम्भेङ्गुदीसर्षपातसीतैलसिद्धाभ्यां बद्धमूत्रैर्वा जाङ्गलैर्मांसैरपहृतमेदोभिरम्लैरघृतैश्चेति ॥ ततादित एव प्रमेहिणं स्निग्धमन्यतमेन तैलेन प्रियङ्ग्वादिसिद्धेन वा घृतेन वामयेत्प्रगाढंविरेचयेच्च ॥ विरेचनादनन्तरं सुरसादिकषायेणास्थापयेन्महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन दह्यमानञ्च न्यग्रोधादिकषायेण निःस्नेहेन ततः शुद्ध देहमामलकरसेन हरिद्रां मधुसंयुक्तां पाययेत् त्रिफला विशाला देवदारुमुस्तकषायं वा शालकम्पिल्लकमुष्ककक्कमक्षमात्रं वा मधुमधुरमामलकरसेन हरिद्रायुतम्। कुटजकपित्थरोहितविभीतक सप्तपर्णपुष्पकल्कं वा । निम्बारग्वधसप्तपर्णमूर्वाकुटजसोमवृक्षपलाशानां वा त्वक्पत्रमूलफलपुष्पकषायाणि ॥ एते पञ्चप्रयोगाः सर्व्वमेहानामपहन्तारो व्याख्याताः ॥ विशेषतश्चात ऊर्द्धं । तत्रोदकमेहिनं पारिजातकषायं पाययेत् । इक्षुमेहिनं वैजयन्ती कषायम् । सुरामेहिनं निम्बकषायम् । सिकतामेहिनं चित्रककषायं । शनैर्मेहिनं खदिरकषायं । लवणमेहिनं पाठागुरुकषायं । पिष्टमेहिनं हरिद्रादारुहरिद्राकषायं । सान्द्रमेहिनं सप्तपर्णकषायं । शुक्रमेहिनं दुर्वाशैवलप्लवहठकरञ्जकसेरुककषायं ककुभचन्दनकषायं वा ॥ फेण मेहिनं त्रिफलारग्वधमृद्वीकाकषायं मधुरं कफजे तु मधुमधुरमिति ॥ पैत्तिकेषु नीलमेहिनं शालसारादि कषायमश्वत्थकषायं वा पाययेत् ॥ हरिद्रामेहिनं राजवृक्षकषायम् । अम्लमेहिनं न्यग्रोधादिकषायं मधुमिश्रं । क्षारमेहिनं त्रिफला कषायं । मञ्जिष्ठामेहिनं मञ्जिष्ठाचन्दनकषायं । शोणितमेहिनं गुडूचितिन्दुकास्थिकाश्मर्य्यखर्ज्जूरकषायं मधुमिश्रम् ॥ अतऊर्द्ध्वमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः ॥ तद्यथा । सर्पिर्मेहिनं कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्क गुडूचीचित्रक कषायेण पाययेत्।वसामेहिनमग्निमन्थकषायं शिंशपाकषायं वा क्षौद्रमेहिनं खदिरक्रमुककषायं हस्तिमेहिनं तिन्दुककपित्थशिरीषपलाशपाठामूर्व्वादुःस्पर्शाकषायं मधुमिश्रं हन्त्यश्वशूकरखरोष्ट्रास्थिक्षारं चेति ॥ दह्यमानमौदककन्दक्वाथसिद्धां यवागूं क्षीरेक्षुरसमधुरां पाययेत्॥ततः प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीवकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टानयस्कृतीर्लेहानासवान् कुर्व्वीत ॥ शृङ्गाटकगिलोड्यविसमृणालकसेरुकमधुकाम्रजम्बुसनतिनिशककुभकदङ्गरोध्रभल्लातकचर्म्मिवृक्षगिरिकर्णिकाशीत शिवनिचुलदाडिमाजकर्णहरिवृक्षराजादनगोरघोण्टाविकङ्कतेषु वा॥ यवान्नविकारांश्च सेवेत । यथोक्तां कषायसिद्धां चास्मै यवागूं प्रयच्छेत् ॥ कषायाणि वा पातुं महाधनमहिताहारमौषधद्वेषिणमीश्वरं वा पाठाभयाचित्रकप्रगाढममल्पमाक्षिकमन्यतममासवं पाययेदङ्गारमूल्यावधंशं वा माध्वीकमभीक्ष्णम् ॥ मधुकपित्थमरिचानुविद्धानि चास्मै पानान्युपहरेत् । उष्ट्राश्वतरखरपुरी-

धचूर्णानि चास्मै दद्यादशनेषु । हिङ्गुसैन्धवयुक्तैर्यूषैः सार्षपैश्च रागैर्भोजयेत् । अविरुद्धानि चास्मै पानभोजनान्युपहरेद्रसवन्ति । प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीडागजतुरगरथपदातिचर्य्यापरिक्रमणान्यस्त्रोपास्त्रं वा सेवेरन् ॥ अधनस्त्वबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशो ग्रामैकरात्रानुवासी मुनिरिव संयतात्मा योजनशतमधिकं वा गच्छेत् । महाधनो वा श्यामाकनीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारो मृगैः सहवसेत्तन्मूत्रशकृद्वृत्तो सततमनुव्रजेद्गा ब्राह्मणो वा शिलोञ्छवृत्तिर्भूत्वा ब्रह्मरथमुपधारयेत् । पठत्सततमितरः खनेद्वा कूपं । क्रमन्तु सततं रक्षेत्॥ भवति चात्र ॥ अधनो वैद्यसन्देशादेवं कुर्वन्नतन्द्रितः ।संवत्सरादन्तराद्वा प्रमेहात्प्रतिमुच्यते ॥

## द्वादशोऽध्यायः ॥

अथातः प्रमेहपिडकाचिकित्सितं व्याख्यास्यामः ।

सराविकाद्या नव पिडकाः प्रागुक्तास्ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ता मृदवोऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः ॥ तानिरुपद्रुतं प्रमेहिणमुपचरेत्तत्र पूर्वरूपेष्वपतर्पणं कषायं वस्तमूत्रं चोपदिशेत् । एवमकुर्व्वतस्तस्य मधुराहारस्य मूत्रं स्वेदःश्लेष्मा च मधुरोभवति प्रमेहश्चाभिव्यक्तो भवति ततोभयतः संशोधनमासेवेत । एवमकुर्व्वतस्तस्य दोषाः प्रवृद्धा मांसशोणितं प्रदूष्य शोफं जनयन्त्युपद्रवान्वा कांश्चित्ततोक्तः प्रतीकारः शिरामोचश्च । एवमकुर्वतस्तस्य शोफो वृद्धोऽतिमात्ररुजो विदाहमापद्यते तत्र शस्त्रप्रणिधानमुक्तं व्रणक्रियोपसेवा च ।एवमकुर्वतस्तस्य पूयोऽभ्यन्तरमवदार्य्योत्सङ्गं महान्तमवकाशं कृत्वा महद्वोभवत्यसाध्यः । तस्मादादित एव प्रमेहिनमुपक्रमेत् ॥ भल्लातकविल्वत्वम्बुपिप्पलीमूलोदकीर्य्याविषाभूपुनर्नवाचित्रकशठी स्नुहीवरुणकपुष्करदन्तीपथ्यादशपलोन्मितान् यवकोलकुलत्थांश्च प्रास्थिकान् सलिलद्रोणे निःक्काथ्य चतुर्भागावशिष्टेऽवताय्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पलीविडङ्गशिरीषाद्यैं भागैरर्द्धपलिकैर्घृतप्रस्थं विपाचयेन्मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनं नाम्ना धान्वन्तरम् ॥ दुर्व्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीरत्वात्तस्मात्तीक्ष्णमेतेषां शोधनं कुर्व्वीत ॥ पिडकापीडिताः सोपद्रवाः सर्व्व एव प्रमेहा मूत्रादिमाधुर्य्यं मधुगन्धसामान्यात्पारिभाषिकीं मधुमेहतां लभन्ते । नचैतान् कथञ्चिदपि स्वेदयेत् मेदोवहुत्वादेषां विशीर्य्यते देहः स्वेदेन रसायनीनाञ्च दौर्बल्यान्नोर्द्धमुत्तिष्ठन्ति प्रमेहिणां दोषाः । ततो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति । अपक्कानां पिडकानां शोफवत्प्रतीकारः पक्कानां व्रणवदिति । तैलन्तु व्रणरोपणादौ कुर्व्वीत । आरग्वधादिकषायमुत्सादनार्थे शालसारादिकषायं परिषेचने पिप्पल्यादिकषायं पानभोजनेषु पाठाचित-

कषाङ्ग ष्ठाचुद्रवृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात्। शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य्य परिस्राव्य पुनरुपनीय साधयेत् सिध्यति चामलकरोध्रप्रियङ्गुदन्तीकृष्णायस्ताम्रचूर्णान्यावपेद् तदनुपदग्धले-हीभूतमवतार्य्यानुगुप्तं निदध्यात्ततो यथायोगमुपयुञ्जीत। एष लेहः सर्व्वमेहानां ह-न्ता॥ त्रिफलाचित्रकत्रिकटुविड़ङ्गमुस्तानां नवभागास्तावन्त एव कृष्णायश्चूर्णस्य तत्स-र्व्वमैकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत। एतन्नवायसमेतेन जा-ठर्य्यं न भवति सन्नोऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोमाविपाककासश्वासप्रमेहाश्च न भवन्ति॥ शालसारादिनिर्यूहे चतुर्थांशावशेषिते। परिस्रुते ततः शीते मधु माचिक-मावपेत्॥ फाणितीभावमापन्नं गुडं शोधितमेव च। श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्या-दिगणस्य च॥ ऐकध्यमावपेत्कुम्भे संस्कृते घृतभाविते। पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तः शुचौ दृढे॥ श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान्। खदिराङ्गारतप्तानि ब-हुशः सन्निपातयेत्॥ सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत्। मासांस्त्रींश्चतुरो वापि यावदालोहसङ्क्षयात्॥ ततो जातरसं तन्तु प्रातः प्रातर्यथाबलं। निषेवेत यथायोगमा-हारं चास्य कल्पयेत्॥ कार्श्यं कृइलिनामेष सन्नस्याग्नेः प्रसाधकः। शोफनुद्गुल्महृत्-कुष्ठमेहपाण्डुामयापहः॥ प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः। अभिष्यन्दापहरणो लोहारिष्टो महागुणः॥ प्रमेहिणो यदा मूत्रपिच्छिलमनाविलं।विशदं तिक्तकटुकं तदा-रोग्यं प्रचक्ष्यते॥

## त्रयोदशोऽध्यायः॥

अथातो मधुमेहचिकित्सितं व्याख्यास्यामः।

मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितं।योगेनानेन मतिमान् प्रमेहिणमुपाचरेत्॥ मासे शुक्रे शुचौ चैव शैलाः सूर्य्यांशुतापिताः।जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि॥ शि-लाजत्विति विख्यातं सर्व्वव्याधिविनाशनं।तेष्वादीनान्तु लोहानां षण्णामन्यतमान्वयं॥ज्ञेय स्वगन्धतश्चापि षड्योनिप्रथितं चितौ।लोहाद्भवति तद्यस्माच्छिलाजतु जतुप्रभं॥ तस्य लो-हस्य तद्वीर्य्यं रसञ्चापि विभर्त्ति तत्।त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरं॥यथा तथाप्र-योगेपि श्रेष्टे श्रेष्ठगुणाः स्मृताः।यत्सर्व्वं तिक्तकटुकं कषायानुरसं सरं॥कटुपाक्युष्णवी-र्य्यञ्च शोषणं च्छेदनं तथा।तेषु यत्कृष्णमलघु स्निग्धं निःशर्करञ्च यत्॥गोमूत्रगन्धि यच्चा पि तत्प्रधानं प्रचक्षते।तद्भावितं सारगणैर्ह्यतद्दोषो दिनोदये॥पिबेत्सारोदकेनैव श्लक्ष्ण-पिष्टं यथाबलं। जाङ्गलेन रसेनान्नं तस्मिञ्जीर्णे तु भोजयेत्॥उपयुज्य तुलामेवं गिरिजा-दमृतोपमात्। वपुर्वर्णबलोपेतो मधुमेहविवर्ज्जितः॥जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः।

शतं शतं तुलायान्तु सहस्रं दश तौलिके॥भल्लातकविधानेन परिहारविधिः स्मृतः।मेहं कुष्टमपस्मारमुन्मादं श्लीपदं गरं॥शोषंशोफार्शसी गुल्मं पाण्डुतां विषमज्वरम्। अपोह त्यचिरात्कालाच्छिलाजतु निषेवितं॥नसोऽस्ति रोगो यश्चापि निहन्यान्न शिलाजतु। शर्करां चिरसम्भूतां भिनत्ति च तथाश्मरीं॥भावनालोडने चास्य कर्त्तव्ये भेषजैर्हितैः। एवञ्च माक्षिकं धातुं तापोजममृतोपमं॥ मधुरं काञ्चनाभास मम्लं वा रजतप्रभं॥पिबन् हन्ति जराकुष्ठमेहपाण्डामयक्षयान्॥तान्नावितः कपोतांश्च कुलत्थांश्च विवर्जयेत्। पञ्चकर्म गुणातीतं अद्यावन्तं जिजीविषुं॥योगेनानेन मतिमान् साधयेत्कुष्टिनं नरम्। वृक्षास्तुमतिवरका ये स्युः पश्चिमार्णवभूमिषु॥वीचीतरङ्गविक्षेप मारुतोद्धूतपल्लवाः। तेषां फलानि गृह्णीयात्सुपक्वान्यम्बुदागमे॥ मज्जस्तेभ्योऽपि स- हृत्य शोषयित्वा विचूर्ण्य च॥ तिलयवत्पीडयेद्द्रोण्यां क्वाथयेद्वा कुसुम्भवत्॥ तत्तैलं संहृतंभूय पचेदातोयसंक्षयात्। अवतार्य्य करीषे च- पक्षमात्रं निधापयेत्॥स्निग्धःस्विन्नो हृतमलःपश्चादूर्द्धं प्रयत्नवान्। चतुर्थभक्तान्तरितं शुक्लादौ दिवसे शुभे॥ मन्त्रपूतस्य तैलस्य पिबेन्मात्रां यथाबलं। तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्र्यते॥ मज्जसार महावीर्य्य सर्वान्धातून्विशोधय। शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः॥ तेनास्योर्द्धमधश्चापि दोषा यान्त्यसकृत्ततः। अस्नेहलवणां सायं यवागूं शीतलां पिबेत्॥ पञ्चाहं प्रतिवेत्तैलमनेन विधिना नरः। पञ्चं परिहरेद्वापि मुद्गयूषौदनाशनः॥ पञ्चभिर्दिवसैरेवं सर्वकुष्ठैर्विमुच्यते। तदेव खदिरक्वाथे त्रिगुणे साधु साधितं॥ निहन्ति पूर्ववत्पक्वं पिबेन्मासमतन्द्रितः। तेनाभ्यक्तशरीरश्च कुर्वीताहारमीरितं॥ भिन्नस्वरं रक्तनेत्रं विशीर्णं क्रिमिभक्षितं। अनेनाशु प्रयोगेण साधयेत् कुष्ठिनंनरं॥सर्पिर्मधुयुतं पीतंतदेवखदिराम्बुना।पक्षिमांसरसाहारं करोति द्विशतायुषं॥ तदेव नस्ये पञ्चाशाद्दिवसानुपयोजितं। वपुष्मन्तं श्रुतिधरं करोति त्रिशतायुषं॥ शोधयन्तिनरं पीता मज्जानस्तस्य मात्रया। महावीर्य्यस्तुवरकः कुष्ठमेहापहः परः॥ सान्तर्द्धूमस्तस्य मज्जा तु दग्धः क्षिप्तस्तैले सैन्धवं चाञ्जनञ्च। ऐन्द्यं हन्यादर्शनक्ताभ्यक्ताचान्नीलीरोगं तैमिरं चाञ्जनेन॥

## ॥ चतुर्दशोऽध्यायः ॥

अथातः उदराणां चिकित्सितं व्याख्यास्यामः।

अष्टावुदराणि पूर्व्वमुद्दिष्टानि तेष्वसाध्यं बद्धगुदं परिस्रावि चावशिष्टानि कृच्छ्रसाध्यानि सर्वाण्येव च प्रत्याख्यायोपक्रमेत। तेष्वाद्यश्चतुर्वर्गो भेषजसाध्यः। कालप्रकर्षात्सर्वाण्येव शस्त्रसाध्यानि वर्ज्जयितव्यानि वा॥ उदरी तु गुर्व्वभिष्यन्दि रूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान् परिहरेत्। शालिषष्टिककयवगोधूमनी

वारान्नित्यमश्नीयात् ॥ तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा तिल्वकविपक्केनानुलोम्यचित्रा फलतैलप्रगाढेन विदारिगन्धाकषायेणास्थापयेद-नुवासयेच्च शाल्वणेन चोपनाहयेदुदरं ॥ भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन चाभीक्ष्णं स्वेदयेत् ॥ पित्तोदरिणन्तु मधुरगणविपक्केन सर्पिषास्नेहयित्वा श्यामात्रिफलात्रिवृद्विपक्केनानुलोम्यशर्करामधुघृतप्रगाढेन न्यग्रोधादिकषायेणास्थाप-येदनुवासयेच्च पायसेनोपनाहयेदुदरं भोजयेच्चैनं विदारिगन्धादिसिद्धेनपयसा॥श्लेष्मोद-रिणं पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीरविपक्केनानुलोम्य त्रिकटुकमूत्र-क्षारतैलप्रगाढेन मुष्ककादिकषायेणास्थापयेदनुवासयेच्च शणातसी धातकीकिण्वसर्षप-मूलकबीजकल्कैश्चोपनाहयेदुदरं भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलत्थयूषेण पायसेन वा स्वेदयेच्चाभीक्ष्णम् ॥ दूष्योदरिणन्तु प्रत्याख्याय सप्तलाशङ्खिनी स्वरससिद्धेन सर्पिषा विरेचयेन्मासमर्द्धमासंवा वा महावृक्षक्षीरसुरागोमूत्रसिद्धेनवाशुद्धकोष्टन्तु मद्येनाश्वमारकगुञ्जाकाकादनीमूलकल्कं पाययेत्। इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेत्। वल्लीफलानि वा मूलजं वा विषमासेवयेत् तेनागदो भवत्यन्यं वा भावमापद्यते ॥ भवतिचात्र ॥ कुपितानिलमूलत्वात्स ञ्चयित्वान्मलस्य च । सर्व्वोदरे-षु शंसन्ति बहुशस्त्वनुलोमनम् ॥ अत ऊर्द्धं सामान्ययोगान्वक्ष्यामः ॥ तद्यथा । एरण्ड-तैलमहरहर्मासं द्वौ वा केवलमूत्रयुक्तं क्षीरयुक्तं वा सेवेतोदकवर्जी माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रं ॥ उष्ट्रीक्षीराहारो वान्नवारिवर्जी पिप्पलीं वा मासं पूर्व्वोक्तेन विधानेनासेवेत ॥ सैन्धवाजमोदायुक्तं वा निकुम्भतैलं आर्द्रकशृङ्गवेररस-पात्रशतसिद्धं वा वातशूलेऽवचार्य्यं ॥शृङ्गवेररसविपक्कं क्षीरमासेवेत ॥ चव्यशृङ्गवे-रकल्कं वा पयसा सरलदेवदारुचित्रकमेव वा । सुरङ्गीशालपर्णीश्यामा पुनर्नवाकल्कं वा ॥ ज्योतिष्कफलतैलं वा क्षीरेण स्वर्जिकाहिङ्गुमिश्रं पिबेत् ॥ गुडद्वितीयां वा हरि-तकीं भक्षयेत्। स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन पथ्याकृष्णाचूर्णं वा स्नुहौ भावितामुत्कारिकां पक्कां दापयेत्। हरीतकीचूर्णप्रस्थमाढके घृतस्याङ्गारेष्वभिवि-लाप्य खजेनाभिमथ्यानुगुप्तंकृत्वार्द्धमासं यवपल्ले वासयेत्ततस्तोद्धृत्यपरि स्राव्य हरीतकी-क्वाथाम्लदधीन्यन्यावाप्यविपचेत् यद्यथायोगं मासमर्द्धमासंवा पाययेत् । गव्ये पयसी महावृक्षक्षीरमावाप्य विपचेद्विपक्कं चावतार्य्यशीतीभूतं मन्थानेनाभिमथ्य नवनीतमा-दाय भूयो महावृक्षक्षीरेणैव विपचेत्तद्यथायोगं मासं मासार्द्धं वा पाययेत् ॥ चव्यचि-त्रकदन्त्यतिविषाकुष्टसारि वा त्रिफलाजमोदहरिद्राशङ्खिनीत्रिवृत्त्रिकटुकानामर्द्धं का-र्षिका भागा राजवृक्षफलमज्जानामष्टौ कर्षामहादुक्षक्षीरपले द्वे गवां क्षीरमूत्रयोरष्टाव-ष्टौपलानिएतत्सर्वं घृतप्रस्थे समवाप्य विपचेत् तद्यथायोगं मासमर्द्धं मासं वा पाययेत ।

एतानि तिल्वकघृतचतुर्थानि सर्पींष्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचनार्थं ॥ मूत्रासवारिष्टसुराश्चाभीक्ष्णंमहानृच्च क्षीरसंभृताः सेवत । विरेचनद्रव्यकषायं वाशरङ्गवेरदेवदारुप्रगाढं ।।वमनविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादि वचादिहरिद्रादिपरिपठितानाञ्च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानाञ्च लवणानां तत्सर्व्वं मूत्रगणे प्रक्षिप्य महावृक्ष मृदग्निना घट्टयन्विपचे दप्रदग्धकल्कं तत्साधुसिद्धमवतार्य्य शीतीभूतमक्षमात्रां गुटिकां वर्त्तयेत्तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रींश्चतुरो वा सेवेत। एषानाहवर्त्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते कोष्ठजांश्च क्रमीनपहन्ति कासश्वासक्रमि कुष्ठप्रतिश्यायारोचका विपाकोदावर्त्तांश्च नाशयति ॥ मदनफलमज्जकुटजजीमूतकेक्ष्वाकुधामार्गववित्रत्त्रिकटुसर्षपलवणानि महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्ट्वाङ्गुष्ठमात्रां वर्त्तिं कृत्वोदरिण आनाहे तैललवणाभ्यक्तगुदस्यैकां द्वे वा पायौ निदध्यादेषानाहवर्तिक्रिया वातमूत्रपुरीषोदावर्त्ताध्मानानाहेषु विधेया प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामवाहौ कुर्प्परा भ्यन्तरतः सिरांसिविध्येद्विमर्दयेत्पाणिना प्लीहानं रुधिरस्यन्दनार्थंततः संशुद्धदेहं समुद्रशुक्तिकाक्षारं पयसा पाययेत हिङ्गु सौवर्चिकाक्षारेण स्नुतेन पलाशक्षारेण वा यवक्षारं । पारिजातकेक्षुरकापामार्गक्षारं वा तैलसंमृष्टं । शोभाञ्जनकषायं वा पिप्पलीसैन्धवचित्रकयुक्तं । पूतिकरञ्जक्षारं वाम्लस्रुतं विडलवणपिप्पलीप्रगाढं ॥ पिप्पलीमूलचित्रकशृङ्गवेरयवक्षारसैन्धवानां पलिका भागो घृतप्रस्थं तत्तुल्यं क्षीरं तदेकध्यं विपचयेदेतत्षट्पलकं नाम सर्पिः प्लीहाग्निसङ्गगुल्मोदरोदावर्त्तश्वयथुपाण्डुरोगकासश्वासप्रतिश्यायोर्द्ध्ववातविषमज्वरानपहन्ति मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत यकृद्दाल्ल्येऽप्येष एव क्रियाविभागःविशेषतस्तु दक्षिणबाहौ सिराव्यधः॥मणिबन्धं सङ्कनास्य वामाङ्गुष्ठसमीरितां । दहेत्सिरां शरेणाशु प्लीहघ्नो वैद्यः प्रशान्तये ॥ बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधो नाभेर्व्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणान्यन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्र प्रतिरोधकरमश्मानं वालं वापोह्य मलजातं वाततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा वाह्यं व्रणमुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य तच्छिद्रमन्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत्दृष्टे च तासां कायानपहरेन्न शिरांसि ततःपूर्व्ववत्सीव्येत्सन्धानञ्च यथोक्तं कारयेत् यष्टीमधुकमिश्रया च कृष्णमृदावलिप्य बन्धेनोपचरेत्ततो निवातमागारं प्रवेश्याचारि कमुपदिशेद्वासयेच्चैनं तैलद्रोण्यां सर्पिर्द्रोण्यां वापयोवृत्तिमिति ॥ उदकोदरिणस्तु वातहरतैलाभ्यक्तस्योष्णो दकस्विन्नस्य स्थितस्यासैः सुपरिगृहीतस्याकक्षात्परिवेष्टितस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराजरा व्रीहिमुखेनाङ्गुष्ठोदरप्रमा-

णमवगाढं विध्येत् । तत्र त्रिष्वादीनामन्यतमस्यनाडो द्विद्वारां पत्त्रनाडींवा संयोज्य दो षोदकमवसिञ्चेत्ततो नाडीमपहृत्य तैलङ्लवणेनाभ्यज्य व्रणबन्धेनोपचरेन्नचैकस्मिन्ने-व दिवसे सर्व्वं दोषोदकमपहरेत् सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दातीसारश्वासपाददा-हाउत्पद्यरेन्नापूर्य्यते वा भूयतरमुदरमशञ्जातप्राणस्य तस्मात्तृतीयचतुर्थपञ्चमषष्ठा-ष्टमदशम द्वादशषोडशरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमवसिञ्चेत् ।निः स्रुते निस्रुते च दोषे गाढतर माविककौशेय चर्म्मणामन्यतमेन परिवेष्टयेदुदरं तथा नाध्मायतिवायुः षण्मासांश्च पयसा भोजयेज्जाङ्गलरसेनवा तत्र त्रीन्मासानर्द्धोदकेन पयसा फलाम्लेनजाङ्गलरसेन वावशिष्टं मासत्रयमन्नं लघु हितंवा सेवेतैवं संवत्सरे-णादगो भवति ॥ भवति चात्र ॥ आस्थापने चैव विरेचने च पाने तथाहार विधि-क्रियासु । सर्व्वोदरिभ्यः कुशलैः प्रयोज्यंश्चीरं श्टतं जाङ्गलजो रसो वा ॥

## पञ्चदशोऽध्यायः ॥

अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः ।

नातः कष्टतममस्ति यथामूढगर्भशल्योद्धरणमत्र हि यानियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्त्तव्यं स्पर्शेन । उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदन पीडनर्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं वा हिंसता तस्मादधिपतिमापृच्छ्यप रञ्च यत्नमास्थायोपक्रमेत । तत्र समासेनाष्टविधा मूढगर्भगतिरुद्दिष्टाविधा स्व-भावगता अपि त्रयः सङ्गा भवन्ति शिरसो वैगुण्यादंसयोजघनस्यवा जीवति तु-गर्भे सूतिका गर्भनिर्हरणे प्रयतेत निर्हर्त्तुमशक्ये च्यवनान्मन्त्रानुपश्टणुयात् तान्वच्यामः इहामृतञ्च सोमञ्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते इदम-मृतमपां समुद्धृतं वै तव लघुगर्भमिमंप्रमुञ्चतु स्त्री । तदनलपवनार्कवासवास्ते सहलव-णाम्बुधरैर्दिशन्तु शान्तिं ॥ मुक्ताः पशोर्व्विपाशाश्च मुक्ता सूर्य्येण रश्मयः । मुक्तः सर्व्व-भयाद्गर्भं एह्येहि विरमावितः ॥ औषधानि च विदध्याद्यथोक्तानि । मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वननगवत्तिकाशाल्मलीमृत्स्नघृताभ्यां म्रक्ष-यित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत् । तत्र सक्थिभ्यामागतमनुलोममेवाच्छेत् । एकसक्थ्निप्रपन्नस्येतरसक्थ्नि प्रसार्य्यापिहरेत् । स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्द्ध-मुत्क्षिप्य सक्थिनीप्रसार्य्यापिहरेत् । तिर्य्यगागतस्य परिघस्येव तिर्य्यगोनस्य पश्चादर्द्ध-मूर्द्धमुत्क्षिप्य पूर्वार्द्धमपत्यपथंप्रत्यार्ज्जवमानीयापहरेत्॥पार्श्वापवृत्तशिरसमंसम्प्रपीड्योर्द्ध-मुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्बाहुद्वयप्रपन्नस्योर्द्धमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत् ॥ द्वावन्त्यावसाध्यौ मूढगर्भौ ॥ एवमशक्ये शस्त्रमवचारयेत् । सचेतनञ्च

शस्त्रेण न कथञ्चन दारयेत्।दार्य्यमाणो हि जननीमात्मानञ्चैव घातयेत्।तत्र स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य्य शिरःकपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वापहरेदभिन्नेशिरसि चाक्षिकूटे गण्डे वा अंससं सक्तस्यांसदेशे बाहुं छित्त्वा दृतिमिवाततं वातपूर्णोदरं वा विदार्य्य निरस्यान्त्राणि शिथिलीभूतं माहरेज्जघनसक्तस्य वा जघनकपालानीति॥ यद्यदङ्गं हि गर्भस्य तस्य सजति सद्भिषक्। सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारींच यत्नतः गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः। तत्रानल्पमतिर्व्वैद्यो वर्त्तेत विधिपूर्व्वकं॥नोपेक्षेतमृतं गर्भं मुहूर्तमपि पण्डितः।सह्याशु जननीं हन्ति निरुच्छासपशुं यथा॥मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता। वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिं स्यात्कदाचन॥ अथापतन्तामपरां पाययेत्पूर्व्ववद्भिषक्। हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा॥ धुनुयाच्च मुहुर्नारीं पीडयेद्वांसपिण्डिकां। तैलाक्तयोनेरेवं तां पातयेन्मतिमान्भिषक्॥ एवं निहृतशल्यान्तु सिञ्चेदुष्णेन वारिणा। तैलेऽभ्यक्तशरीरायायोनौ स्नेहं निधापयेत्॥ एवं मृदूभवेद्योनिस्तच्छूलं चोपशाम्यति। कृष्णातन्मूलशुण्ठ्येलाहिङ्गुभार्गी सदीप्यका॥ वचामतिविषां रास्नां चव्यं सचूर्णं पाययेत्। स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च॥ क्वाथं चैषां तथा कल्कं चूर्णं वा स्नेहवर्ज्जितं। शाकत्वग्विङ्गतिविषापाठाकटुकरोहिणीः॥ तथा तेजोवतीं चापि पाययेत्पूर्व्ववद्भिषक्। त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत्॥ पाययेद्वासवं नक्तमरिष्टं वा सुसंस्कृतम्। शिरीषककुभाभ्याञ्च तोयमासेच हितं॥ उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत्। सर्व्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना॥ स्वेदाभ्यङ्गपरा नित्यं भवेत्क्रोधविवर्ज्जिता। पयो वातहरैः सिद्धं दशाहं भोजने हितं॥ रसं दशाहं शेषे तु यथायोगमुपाचरेत्। व्युपद्रवां विशुद्धाञ्च ज्ञात्वा च बलवर्णिनीं॥ऊर्द्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत्परिहारतः। योनिसन्तर्पणेऽभ्यङ्गे पाने वस्तिषु भोजने॥ बलातैलमिदं वास्यै दद्यादनिलवारणं। बलामूलकषायस्य दशमूलीकृतस्य च॥ यवकोलकुलत्थानां क्वाथस्य पयसस्तथा। अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः॥ पचेदावाप्य मधुरं गणंसैन्धवसंयुतं। तथागुरुं सर्ज्जरसं सरलं देवदारु च॥ मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवां। मांसीं शैलेयकं पत्रं तगरं शारिवां वचां॥ शतावरीमश्वगन्धां शतपुष्पां पुनर्नवां॥ तत्साधु सिद्धं सौवर्णे राजते मृण्मयेऽपि वा। प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत्। बलातैलमिदं ख्यातं सर्व्ववातविकारनुत्॥ यथाबलमतो मात्रां सूतिकायै प्रदापयेत्। या च गर्भार्थिनी नारी क्षीणशुक्रश्च यःपुमान्॥ वातक्षीणे मर्महते मथितेऽभिहते तथा। भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते॥ एतदाक्षेपकादींश्चैः वातव्याधीन्नपोहति। प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः॥ राज्ञामेतद्धि कर्त्तव्यं राजमात्राश्च ये नराः।

हिक्काकासमधीमन्थं गुल्मं श्वासञ्चदुस्तरम् । षण्मासानुपयुज्यैतदन्त्रवृद्धि मपोहति ॥ सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः॥ बलाकषायपीतोयःतिलेभ्यो वाप्यनेकशः । तैलमुत्पाद्य तत्कायशतपाककृतं शुभं ॥ निवाते निभृतागारे प्रयुञ्जीत यथाबलं । जीर्णेऽस्मिन्पयसा स्निग्धमश्नीयात् षष्टिकौदनं ॥ अनेन विधिना द्रोणमुपयुज्यान्नमोरितं भुञ्जीत द्विगुणं कालं वलवर्णान्वितस्ततः ॥ सर्व्वपापैर्विनिर्मुक्तः शतायुः पुरुषो भवेत् । शतं शतं तथोत्कर्षो द्रोणे द्रोणे प्रकीर्त्तितः ॥ वलाकं ल्पेनातिवलागुडूच्यादित्यपर्णिषु । सैरेयके वोरतरौ शतावर्य्या त्रिकण्टके ॥ तैलानि मधुके कुर्य्यात्प्रसारण्याञ्च बुद्धिमान्। नीलोत्पलं वरो मूलं गव्ये चीरे विपाचयेत् ॥ शतपाकं ततस्तेन तिलतैलं पचेद् भिषक्। बलातैलस्य कल्कां स्तु सुपिष्टांस्तत्र दापयेत् ॥ सर्वेषामेव जनीयादुपयोगं चिकित्सकः। वलातैलतदेतेषां गुणाश्चैव विशेषतः ॥

## षोडशोऽध्यायः ॥

। अथातो विद्रधीनां चिकित्सितं व्याख्यामः ।

उन्नाविद्रधयः षडेव तेष्वसाध्यस्तु सर्वजः । शेषेष्वामेषु कर्त्तव्या त्वरितं शोफवत्क्रिया ॥ सुरङ्गीमूलकल्कैस्तु घृततैलवसायुतैः। सुखोष्णो बहलो लेपःप्रयोज्यो वातविद्रधौ ॥ सानूपौदकमांसस्तु काकल्यादिः सतर्पणः । स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने ॥ नेशवारैः सकृशरैः पयोभिः पायसैस्तथा । स्वेदयेत्सततं चापि निर्हरेच्चापि शोणितं ॥ सचेदेवमुपक्रान्तः पःकाभिमुखो यदि । तं पाचयित्वा शस्त्रेण भिन्द्याच्छिन्नञ्च शोधयेत ॥ पञ्चमूलकषायेण प्रचाल्य लवणोत्तरैः । तैलैर्भद्रादिमधुकसंयुक्तैः प्रतिपूरयेत् ॥ वैरेचनिकयुक्तेन तैलेन विशोध्य च। पृथक्पर्ण्यादिसिद्धेन तैलेन च रोपयेत्॥पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः।प्रदिह्यात्चीरपिष्टैर्वा पयस्योशीरचन्दनैः॥पाक्यैः शी तकषायैर्वा चीरैरिचुरसैस्तया।जीवनीयघृतैर्वापि सेचयेच्छर्करायुतैः॥ त्रिवृद्धरीतकीनाञ्च चूर्णं लिह्यान्मधुद्रवं।जलौकोभिहरेच्चासृक् पक्वं चापाद्यबुद्धिमान्॥चीरवृत्तकषायेण प्रचाल्योदकजेनवा।तिलैःसयष्टिमधुकैःसचौद्रैःसर्पिषायुतैः॥ उपदिह्य प्रतनुना वाससा वेष्टयेद्व्रणं। प्रपौण्डरीकमञ्जिष्टामधुकोशीरपद्मकैः सहरिद्रैःकृतंसर्पिःसचीरंव्रणरोपणं।चीरशुक्लापृथक्पर्णी समङ्गारोध्रचन्दनैः॥न्यग्रोधादिप्रवालेषु तेषां तत्त्वक्ष्यवाकृतं।नक्तमालस्य पत्राणि तरुणानि फलानि च ॥ सुमनाश्च पत्राणि पटोलारिष्टयोस्तथा । द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ॥ प्रियङ्गुः गुशमूलञ्चनिचुलस्य त्वगेवच । मञ्जिष्ठाचन्दनोशीरमुत्पलं सारिवा त्रिवृत् ॥ एतेषांकार्षिकंर्भागैर्घृतप्रस्थं विपाचयेत् । दुष्टव्रणप्रशमनं नाडीव्रणविशोधनं ॥ सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभं । दुष्टव्रणाश्च ये केचिद्ये चोत्सृष्ट क्रिया व्रणाः ॥ नाड्यो गम्भीरिकायाश्च सद्यश्छिन्नास्तथैव च । अग्निचारकृताश्चैव

येव्रणा दारुणा अपि ॥ करञ्जाद्येन हविषा प्रशाम्यन्ति न संशयः। इष्टकासिकतालोहगोशकृत्तुषपांशुभिः ॥ मूत्रै रुष्णैश्च सततं स्वेदयेत् श्लेष्मविद्रधिं । कषायपानैर्वमनैरालेपैरुपनाहतैः ॥ हरेद्दोषानभोज्यं चाप्यलाव्वास्तक्तथैव च। आरग्वधकषायेण पक्वं चापाद्य धावयेत् ॥ हरिद्राविवृताशक्तुतिलैर्मधुसमायुतैः। पूरयित्वा व्रणं सम्यग्बध्नीयात्कीर्त्तितं यथा ॥ ततः कुलत्थिकादन्तीविवृच्छ्यामार्कतिल्वकैः। कुर्य्यात्तैलं सगोमूत्रं हितंतत्ससैन्धवम् ॥ पित्तविद्रधिवत्सर्वाः क्रिया निरवशेषतः। विद्रध्योः कुशलःकुर्य्याद्रक्तागन्तुनिमित्तयोः ॥ वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ॥ ऊषकादिप्रतीवापं पिवेद्विद्रधिशान्तये। अनयोर्वर्गयोःसिद्धं सर्पिर्विरेचनेन च। अचिराद्विद्रधिं हन्ति प्रातप्रातर्निषेवितं। एभिरेव गणैश्चापि संसिद्धं स्नेहसंयुतं। काथ्यमास्थापनं चिप्रं तथैवाप्यनुवासनं॥पानालेपनभोज्येषु मधुशिग्रुद्रुमोऽपि वा। दत्तावापो यथादोषमपक्वं हन्ति विद्रधिं ॥ तोयधान्याम्लमूत्रैस्तु पेयो वापि सुरादिभिः। यथादोषगणक्वाथैः पिवेद्वापि शिलाजतु ॥ प्रधानं गुग्गुलुञ्चापि शुण्ठींच सुरदारु च। स्नेहोपनाहौ कुर्य्याच्च सदा चाप्यनुलोमनं ॥ यथोद्दिष्टां सिरां विध्येत् कफजे विद्रधौ भिषक् । रक्तपित्तानिलोत्थेषु केचिद्वाह्यौ वदन्ति तु॥ पक्वं वा वहिरुन्नद्धं भित्त्वा व्रणवदाचरेत् । स्रुतेषूर्द्ध्वमधो वापि क्षैरेयाम्लसुरासवैः ॥ पेयो वरुणकादिस्तु मधुशिग्रुद्रुमोऽपि वा। शिग्रुमूलजले सिद्धं ससिद्धार्थकमोदनम् ॥ यवकोल कुलत्थनां पूर्वै र्भुञ्जीत मानवाः।प्रातः प्रातश्च सेवेत मात्रया तैल्वकं घृतं॥त्रिवृतादिगणक्वाथसिद्धं वाप्य,पशान्तये। नोपगच्छे द्यथापाकं प्रयतेत तथा भिषक् ॥ पर्य्यागते विद्रधौ तु सिद्धिर्नैकान्तिकी स्मृता। प्रत्याख्याय तु कुर्वीत मज्ज जातं तु विद्रधिं ॥ स्नेहस्वेदोपपन्नानां कुर्य्याद्रक्तावसेचनं। विद्रध्युक्तां क्रियां कुर्य्यात्पक्वे वास्थि तु भेदयेत् ॥ निःशल्यमथ विज्ञाय कर्त्तव्यं व्रणशोधनं ॥ धावेत्तिक्तकषायेण तिक्तं सर्प्पिस्तथा हितं । यदि मज्जपरिस्रावो न निवर्त्तेत देहिनः ॥ कुर्य्यात्सं शोधनीयानि कषायादीनि बुद्धिमान् । प्रियङ्गुधातकी रोध्रकट्फलं तिनिसैन्धवं ॥ एतैस्तैलं विपक्वाव्यंविद्रधिव्रणरोपणं ॥

## सप्तदशोऽध्यायः ॥

अथातो विसर्प नाडीस्तनरोगचिकित्सितं व्याख्यास्यामः ।

साध्याविसर्पास्त्रय आदितो ये न सन्निपातक्षतजौ हि साध्यौ । साध्येषु तत्पथ्यगणैर्विदध्याद्घृतानि सेकांश्च तथोपदेहान् ॥ मुस्ता शताह्वा सुरदारुकुष्ठं वाराहि कुस्तुम्बुरु कृष्णगन्धाः । वातात्मके चोष्णगणाः प्रयोज्याः सेकेषुलेपेषु तथाघृतेषु। यत्पञ्चमूलं खल कण्टकाख्यमल्पं महच्चाप्यथ वल्लिजञ्च । तच्चोपयोज्यं भिषजा प्रदेहे सेके घृते चापि तथैव तैले ॥ कसेरुशृङ्गाटकपद्मगुन्द्राः सशैवला सोत्पलकर्दमाश्च । वस्त्रान्तराः पित्त

तं व्याधिबलं निहन्ति ॥ तैलं पिबेत्सर्पिरथो द्वयं वा दत्त्वावसां वा त्रिवृतं विदध्यात् । अपेहिवातादश मूलसिद्धं वैद्यश्चतुः स्नेहमथो द्वयं वा ॥ हिंस्राथराद्रिश्यमृताथ भर्गी श्योनाकबिल्वागुरुकृष्णगन्धाः । गोजी च पिष्टासहतालपत्रा ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ स्वेदोपनाहान्विविधांश्च कुर्यात्तथा प्रसिद्धानपरांश्च लेपान् । विदार्य्य वा पक्वमपोह्य पूयं प्रक्षाल्यबिल्वार्कनरेन्द्रतोयैः ॥ तिलैः सपश्चाङ्गुलपत्रमिश्रैः संशोधयेत् सैन्धवसंप्रयुक्तैः । शुद्धं व्रणंवाप्युपरोपयेयस्तैलेन रास्नासरलान्वितेन ॥ विडङ्गयष्टीमधुकामृताभिः सिद्धेन वाक्षीरसमन्वितेन । जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च ॥ काकोलिवर्गस्यच शीतलानि पिबेत्कषायाणि सशर्कराणि । द्राक्षारसेनेक्षुरसेनवापिचूर्णं पिबेच्चापिहरीतकीनां ॥ मधुमजम्बर्ज्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत्त् । सशर्करैर्वा तृणशून्यकन्दैर्दिह्यादभीक्ष्णं मुचुकुन्दजैर्वा ॥ विदार्य्य वा पक्वमपोह्य पूयं धावेत्कषायेण वनस्पतीनां । तिलैः सयष्टींमधुकैर्व्विशोध्य सर्पिः प्रयोजयं मधुरैर्व्विपक्वं ॥ हृतेषु दोषेषुयथानुपूर्व्या । ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु । स्विन्नस्य विम्लापनमेव कुर्य्यादङ्गुष्ठलोहोपलवेणुदण्डैः । विकङ्कतारग्वधकाकनन्तीकाकादनीतापसवृक्षमूलैः । आलेपयेत्पिण्डकलार्कभार्गीकरञ्जकालामदनैश्च विद्वान् ॥ असमंजातं शममप्रयातमपक्वमेवापहरेद्विदार्य्यादहेत्स्थितेवासृजि सिद्धकर्मा सद्यःक्षतोक्तश्चविधिं विदध्यात् ॥ या मांसकन्दराःकठिना हहत्यस्तास्वेषयोज्यश्च विधिर्व्विधिज्ञैः । शस्त्रेण वापाद्य सुपक्वमाशु प्रक्षालयेत्पथ्यतमैः कषायैः ॥ संशोधनैस्तच्च विशोधयेयुःक्षारत्तरैः क्षौद्रघृतप्रगाढैः । शुद्धं च तैलं त्ववचारणोयं विडङ्गपाठारजनीविपक्वं ॥ मेदःसमुत्थे तिलकल्कदिग्धं दत्त्वोपरिष्टाद्द्विगुणं पटान्तं । हुताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमान्दहने हियात ॥ प्रलिप्य दर्विं मथ लाक्षया वा प्रतप्तयाखेदनमस्य कार्य्यं । निपात्यवा शस्त्रमपोह्यमेदो दहेत्सुपक्वन्त्वथ वाविदार्यं ॥ प्रक्षाल्यमूत्रेण तिलैःसुपिष्टैः सुवर्च्चिकाद्यै र्हरितालमिश्रैः । ससैन्धवैःक्षौद्रवृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य ॥ तैलं विध्याद्द्विकरञ्जगुञ्जावंशावलेखेङ्गुदमूत्रसिद्धं । जीमूतकैः कोशवतीफलै स्वदन्तीद्रवन्तीत्रिवृतासु चैव ॥ सर्पिःकृतं हन्त्यपचीं प्रवृद्धां द्विधाप्रवृत्तं तदुदारवीर्य्यं । निर्गुण्डिजातीवरिहिष्ठयुक्तं जीमूतकंमाक्षिकसैन्धवाढ्यम् । अभिप्रतप्तं वमनं प्रगाढं तुष्टापचीषूत्तममादिशन्ति । कैटर्य्यविम्बीकरवीरसिद्धं तैलं हित मूर्द्धविरेचनञ्च ॥ शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु । मधूकसारश्च हितोऽवपीड़ं फलानिशिग्रो खरमञ्जरेर्व्वा ॥ ग्रन्थीनमर्मप्रभवानपक्वानुद्धत्य चाग्निं विदधीत पश्चात् । क्षारेणवापि प्रतिसारयेत्तुसंलिख्य शस्त्रेण यथोपदेशं ॥ पार्ष्णिं प्रति द्वादशचाङ्गुलानि भित्वेन्द्रवस्तिंपरिवर्ज्य धीमान् । विदार्य्य मत्स्याण्डनिभानिवैद्यो निःकृष्य जालान्यन-

लं विदध्यात् ॥ आगुल्फकर्णात्सुमितस्य जन्तोस्तस्याष्टभागं खुलकादिभज्य । घोणर्जु-वेधः सुरराजवस्तेर्हित्वाक्षिमात्रं त्वपरे वदन्ति ॥ मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक् । अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥ चूर्णस्यकालेप्रचलाककाकगोधाहिकूर्म प्रभवांमसीन्तु । दद्याच्च तैलेनतुसहिङ्गुदीनां यद्वच्यतेश्लीपदिनाञ्च तैलं । विरेचनं धूममुपाददीत भवेच्च नित्यं यवमुद्गभोजी ॥ कर्कारुकैर्व्वारुकनारिकेरपियालपञ्चाङ्गुलवीजचूर्णैः। वातार्व्वुदं क्षीरघृताम्बुसिद्धैरुष्णः सतैलैरुपनाहयेत्त । कुर्य्याच्च मुख्यान्युपनाहनानि सिद्धैश्चमांसैरथ वेसवारैः ॥ स्वेदं विदध्यात्कुशलस्तु नाड्या शृङ्गेन रक्तं बहुशो हरेच्च । वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धं शताख्यं त्रिवृतं पिवेद्वा ॥ स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्व्वुदे कायविरेचनञ्च । विघृष्य चोडुम्बरशाकगोजीपत्रैर्भृशं-क्षौद्रयुतैः प्रलिम्पेत् ॥ श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गरोध्राञ्जनयष्टिकाह्वैः । विस्राव्य चारग्वधगोजिसोमाः श्यामा च योज्याकुशलेन लेपे । श्यामागिरिह्वाञ्जनकीरसेषुद्राक्षारसे तण्डुलिकारसे च । घृतं पिवेत्क्षीतकसंप्रसिद्धं पित्तार्व्वुदी तज्जठरी च जन्तुः॥ शुद्धस्य जन्तोः कफजेऽर्व्वुदे तु रक्तेऽवसिक्ते तुततोऽर्व्वुदं तत् । द्रव्याणि यान्यूर्द्धमधश्च दोषान्हरन्ति तैःकल्ककृतैःप्रदिह्यात्कपोतपारावतविड्विमिश्रैः सकांस्यनीलैः फलाङ्गलाख्यैःमूत्रैस्तु काकादनिमूलमिश्रैः क्षारप्रदिग्धैरथ वा प्रदिह्यात्॥निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमस्तुयुक्तैः । लेपं विदध्यात् कृमयो यथाच मूर्च्छन्ति मूर्च्छन्त्यथ मक्षिकाश्च ॥ अल्पावशिष्टेकृमिभिः क्षते च लिखेत्ततोऽग्निं विदधीत पश्चात् । यदल्पमूलं त्रपुताम्रसीसपट्टैः समावेष्ट्य यदायसैर्व्वा ॥ क्षाराग्निशस्त्राण्यसकृद्विदध्यात् प्राणानहिंसन्भिषगप्रमत्तः । आस्फोतजातीकरवीरपत्रैःकषायमिष्टं व्रणशोधनार्थं ॥ शुद्धे च तैलं विदधीत भार्गीविडङ्गपाटात्रिफलाविपक्वं । यदृच्छया चोपगतानिपाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥ मेदोऽर्व्वुदं स्विन्नमदो विदार्य्य विशोध्य सीव्येद्गतरक्तमाशु । ततो हरिद्रागृहधूमरोध्रपतङ्गचूर्णैः समनःशिलालैः ॥ व्रणं प्रतिग्राह्य मधुप्रगाढैः करञ्जतैलं विदधीत शुद्धे । सशेषदोषाणिहियोर्व्वुदानि करोति तान्याशु पुनर्भवन्ति ॥ तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि तथाहिवह्निः । संस्वेद्य गण्डं पवनोत्थमादौ-नाड्यानिलघ्नौषधपत्रभङ्गैः ॥ अम्लैःसमूत्रैर्विविधैः पयोभिरुष्णैःसतैलैः पिशितैश्चवद्धान् । विस्रावयेत् स्विन्नमतन्द्रितश्च शुद्धं व्रणं नाप्युपनाहयेत्तु॥ शणातसीमूलकशिग्रुकिण्वप्रियालमज्जानुयुतैस्तिलैस्तु॥कालामृताशिग्रुपुनर्नवार्कगजादिनामाकरहाटकुष्ठैः॥ एकैषिकावृश्चकतिल्वकैश्च सुराम्लपिष्टैरसकृद्विदिह्यात् ॥ तैलं पिवेच्चामृतवल्लिनिम्बहंसाह्वयावृश्चकपिप्पलीभिः । सिद्धं वलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी ॥ स्वेदोपनाहैः कफसम्भवन्तु संस्वेद्यविस्रावणमेव कुर्य्यात् । ततोऽजगन्धातिविषाविशल्यावि-

पाणिकाकुष्ठगृञ्जाहृवयाभिः ॥ पलाशभस्मोदकपेषिताभिर्दिहं ह्यात्सगुञ्जाभिरशीतलाभिः । दद्याद्धि सङ्गं लवणैश्चयुक्तं तैलंपिवेन्मागधिकादिसिद्धं ॥ प्रच्छर्दनं मूर्द्धविरेचनञ्च धूमश्ववैरेचनिको हितस्तु । पाकक्रमोवापि सदाविधेयो वैद्येन पाकं गतयोः कथञ्चित् ॥ कटुतिक्तौ द्रयुताः समूलाभल्ला यवान्नानि रसाश्च मौद्गाः । सश्टङ्गवेराः सपटोलनिम्बा हिताय देया गलगण्डरोगे ॥ मेदः समुत्थे तु यथोपदिष्टं विध्यत्सिरां स्निग्धतनोर्न रस्य । श्यामासुधालोहपुरीषदन्तोरसाञ्जनैश्चापि हितः प्रदेहः ॥ मूत्रेण वालोडय हिताय सारं प्रातः पिवेच्छालमहीरुहाणां । शस्त्रेण वापाद्य विदार्य चैनंमेदः समुद्धृत्य हिताय सीव्येत् ॥ मज्जाज्यमेदोमधुभिर्दहेद्वा दग्धे च सर्पिर्मधु चावचार्य्यं । कासीसतुत्थे च ततोऽत्र देये चूर्णी कृते रोचनया समेते । तैलेन चाभ्यज्य हिताय दद्यात्सारोद्भव गोमयजञ्च भस्म ॥ हितश्च नित्यं त्रिफलाकषायो गाढश्च बन्धोयवभोजनञ्च ॥

## एकोनविंशोऽध्यातः ॥

अथातो वृद्ध्युपदंश श्लीपदानां चिकित्सितं व्याख्यास्यामः । अन्त्रवृद्ध्या विना षड्वात्वृद्धयस्तासु वर्ज्जयेत् । अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ॥ अत्यासनं चंक्रमणमुपवासं गुरूणि च । तत्रादितो वातवृद्धौ वैवृतस्निग्धमातुरं ॥ स्विन्नं चैनं यथान्यायं पाययेत विरेचणं । कोशाम्रतिलवकैरण्डफलतैलानि वा नरं ॥ सक्षीरं वा पिवेन्मासं तैलमेरण्डसम्भवं । ततःकालेऽनिलघ्नानां क्वाथैःकल्कैश्च बुद्धिमान् ॥ निरूहयेन्निरूढञ्च भुक्तवन्तं रसौदनं । यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ॥ स्नेहोपनाहौ कुर्य्याच्च प्रदेहांश्चानिलापहान् । विदग्धां पाचयित्वा वा सेवनीं परिवर्ज्जयेत् ॥ भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् । पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ॥ पक्वां वा भिन्द्येद्भिन्नां शोधयेत्क्षौद्रसर्पिषा । शुद्धायाञ्च भिषगद्यात्तैलं कल्कञ्च रोपणं ॥ रक्तजायां जलौकोभिःशोणितं निर्हरेद्भिषक् । पिवेद्विरेचणं वापि शर्कराक्षौद्रसंयुतं ॥ पित्तग्रन्थिक्रमं कुर्य्यादामे पक्वे च सर्व्वदा । वृद्धिं कफात्मिकामुष्णमूत्रपिष्टैःप्रलेपयेत् ॥ पीतदारुकषायञ्च पिवेन्मूत्रेण संयुतं । विम्लापनादृते वापि श्लेषग्रन्थिक्रमोहितः ॥ पक्वायाञ्च विभिन्नायां तैलं शोधनमिष्यते । सुममारुष्कराङ्कोठसप्तपर्णेषु साधितं ॥ मेदःसमुत्थां संस्वेद्य लेपयेत्सुरसादिना । शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ स्विन्नांचावेष्ट्य पट्टेन समाश्वास्य तु मानवं । रक्षेत्फले सेवनीञ्च वृद्धिपत्रेण दारयेत् ॥ मेदस्ततः समुद्धृत्य दद्यात्कासीससैन्धवे । बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलञ्च दापयेत् ॥ मनःशिलाललवणैः सिद्धमारुष्करेषु च । मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत् । सेवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन तु । अथात्र द्विमुखां नाडीं दत्वा विस्त्रावयेद्भिषक् ॥ मूत्रं नाडीमथोद्धृत्य स्थगिकावन्धमाचरेत् । शुद्धायां रोपणं दद्याद्वर्ज्जयेदन्त्रहेतुकीं ॥ अप्राप्तफ-

त्कोशायां वातवृद्धिक्रमो हितः। तत्र या वङ्क्षणस्था तां दहेदर्द्धेन्दुवक्रयाशरमार्गवि-
रोधार्थं कोशप्राप्तां तु वर्ज्जयेत्। त्वचं भित्त्वाङ्गुष्ठमध्ये दहेच्चाङ्गविपर्य्ययात्॥ अनेनैव
विधानेन वृद्धौ वातकफात्मिके। प्रदहेत्प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयोः॥ शङ्खोप-
रि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीं। व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये॥ उ-
पदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः। सिरां विध्येन्मेढ्रमध्ये पातयेद्वा जलौकसः॥
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान्। सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः॥
यदि वा दुर्बलो जन्तुर्न वा प्राप्तं विरेचनम्। निरूहेण हरेत्तस्य दोषमत्यर्थमुच्छ्रितान्॥
प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभिः। सरलागुरुरास्नाभिर्वातजं सम्प्रलेपयेत्॥ निचुलैर-
ण्डबीजानि यवगोधूमसक्तवः। एतैश्च वातजं स्निग्धैः सुखोष्णैः सम्प्रलेपयेत्॥ प्रपौण्ड-
रीकपूर्व्वैश्च द्रव्यैः सेकः प्रशस्यते। गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः॥ सचन्दनो-
त्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत्। पद्मोत्पलमृणालैश्च ससर्ज्जार्ज्जुनवेतसैः॥ सर्पिः
स्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत्। सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः॥ अथ वापि
सुशीतेन कषायेण वटादिना। शालाश्वकर्णाजकर्णधवत्वरिमःकफोत्थितं॥ सुरापिष्टा-
भिरुष्णाभिः सतैलाभिः प्रलेपयेत्। रजन्यतिविषामुस्तासरलासुरदारुभिः॥ सपत्रपाठा-
पत्तूरैरथ वा संप्रलेपयेत्। सुरसारग्वधाद्याश्च क्वाथाभ्यां परिषेचयेत्॥ एवं संशोधनालेप-
सेकशोणितमोक्षणैः। प्रतिकुर्य्यात्क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि॥ नायाति च य-
था पाकं प्रयतेत तथा भिषक्। विदग्धैस्तु सिरास्नायु त्वङ्मांसैः क्षीयते ध्वजः॥ शस्त्रेणो-
पचरेच्चापि पाकमागतमाशु वै। तदापोह्य तिलैः सर्पिःक्षौद्रयुक्तैः प्रलेपयेत्॥ करवीरस्य प-
त्राणि जात्यारग्वधयोस्तथा। प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि॥ सौराष्ट्रीं गैरिकं
तुत्थं पुष्पकासीससैन्धवं। रोध्रं रसाञ्जनं जार्वीं हरितालं मनः शिलां॥ हरेणुकैले च
तथा सूक्ष्मचूर्णानि कारयेत्। तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितं॥ जम्ब्वाम्रसुमनानिम्बश्वे-
तकाम्बोजिपल्लवाः। शल्लकीवदरीविल्वपलाशतिनिशत्वचः॥ क्षीरिणाञ्च त्वचो योज्याः
क्वाथे त्रिफलया सह। तेन क्वाथेन नियतं व्रणंप्रक्षालयेद्भिषक्॥ अस्मिन्नेव कषाये तु
तैलं धीरो विपाचयेत्। गोर्जिविडङ्गयष्टीभिः सर्व्वगन्धैश्च संयुतः॥ एतत्सर्वोपदंशेषु श्रे-
ष्टं रोपणमिष्यते। सर्जिकातुत्थकासीसं शैलेयञ्च रसाञ्जनं॥ मनःशिलासमैश्चूर्णं व्रणवीस-
र्पनाशनं। गुन्द्रान्दग्ध्वा कृतं भस्म हरितालं मनःशिला॥ उपदंशविसर्पाणामेतच्छान्ति-
करं परं। मार्कवस्त्रिफलादन्ती ताम्रचूर्णमयोरजः॥ उपदंशं निहन्त्येष वृक्षमिन्द्राशनि-
र्यथा। उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत्क्रियाम्॥ तयोरेव च या योग्या वीक्ष्य दोषबलाब-
लम्। उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे॥ दुष्टव्रणविधिं कुर्य्यात्कुथितं मेहनं त्यजेत्।
जाम्बोष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक्॥ सम्यग्दग्धस्य विज्ञाय मधुसर्पिः प्रयोजये-

त्। शुद्धे च रोपणं दद्यात्कल्कं तैलं हितञ्च यत्॥ स्नेहस्वेदोवपन्ने तु श्लीपदेऽनिलजे भिषक्। कृत्वा गुल्फोपरि सिरां विध्येत्त, चतुरङ्गुले॥ समाप्यायितदेहश्च वस्तिभिः समुपाचरेत्। मासमेरण्डजं तैलं पिवेन्मूत्रेण संयुतं॥ पयसौदनमश्नीयाच्चागरक्षायितेन च। त्रैवृतंचोपयुञ्जीत शस्तो दाहस्तथाग्निना॥ गुल्फस्याधःसिरां विध्येत् श्लीपदे पित्तसम्भवे। पित्तघ्नीश्च क्रियां कुर्यात् पित्तार्बुदविसर्पवत्॥ सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक्। मधुयुक्तानि वाभीक्ष्णं कषायाणि पिबेन्नरः॥ पिबेद्वाप्यभयाकल्कं मूत्रेणान्यतमेन च। कटुकामम्नतांशुण्ठीं विडङ्गं दारुचित्रकं। हितं वा लेपने नित्यं भद्रदारु सचित्रकम्॥विडङ्गमरिचार्केषु नागरेचित्रकेऽथवा।भद्रदार्व्येलुकाख्ये चसर्व्वेषुलवणेषु च॥तैलं पक्कं पिवेद्वापि यवान्नं च हितं सदा। पिवेत्सर्षपतैलं वा श्लीपदानां निवृत्तये॥प्रतीकरञ्जपत्राणां रसं वापि यथावलं॥ दग्ध्वा मूत्रेण तद्भस्म स्रावयेत्क्षारकल्पवित्। तत्र दद्यात्प्रततीवापं काकोडुम्बरिकारसम्॥ अनेनैव विधानेन पुत्रञ्जीवकजं रसं। प्रयुञ्जीत भिषक्प्राज्ञः कालसात्म्यविभागवित्॥ केचुकाकन्दनिर्य्यासं लवणं त्वथ पाकिमं। रसं दत्वाथ पूर्वोक्तं पेयमेतद्भिषग्जितं॥ काकादनीं काकजङ्घां बृहतीं कण्टकारिकां। कदम्बपुष्पीं मन्दारींलम्बां शुकनशां तथा॥मदनाच्च फलात्क्वाथं शुकाख्याश्वरसंतथा।एष क्षारस्तु पानीयः ीपदं हन्ति सेवितं॥ अपचीं गलगण्डञ्च ग्रहणीदोषमेव च। भक्तस्यानशनं चैव हन्यात्सर्व्वविषाणि च॥एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम्। एतानि॥त यान्हन्ति ये च दुष्टव्रणा नृणाम्॥ द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च।सप्तला शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत्॥ दद्याच्च त्रिफलाक्वाथमेष क्षारस्तु साधितः। अधो गच्छति पीनस्तुपूर्व्वैःस्राप्याशिषः समाः॥

## त्रिंशत्तमो ऽध्यायः॥

अथातः क्षुद्ररोग चिकित्सितं व्याख्यास्यामः।

अत्राजगल्लिकामामां जलौकोभिरुपाचरेत्। शुक्तिश्युन्नीयवक्षारकल्कैश्चालेपयेद्भिषक्॥
श्यामालाङ्गलकोपाठाकल्कैर्वापि विचक्षणः। पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत्॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपी तथा। पाषाणगर्द्दभं चैव पूर्व्वं स्वेदेन योजयेत्॥
मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत्। परिपाकगतान् भित्त्वा व्रणवत्समुपाचरेत्॥
विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम्। इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्। रोपयेत्सर्पिषा पक्वान् सिद्धेन मधुरौषधैः॥
चिप्यमुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक्। चक्रतैलेन चाभ्यज्य सर्ज्जचूर्णेन चूर्णयेत्॥
बन्धेनोपचरेच्छेनमशक्यं चाग्निना दहेत्। मधुरौषधसिद्धेन ततस्तैलेन रोपयेत॥ कुन-

खे विधिरप्येष कार्य्योहि भिषजा भवेत् । विदारिकां सवभ्यज्य स्विन्नां विम्लाप्यलेपयेत्॥ नगवृत्तिकवर्षाभूविल्वमूलैः सुपेषितैः । व्रणभागवतायां वा कत्वा संशोधनक्रियां ॥ रोपणार्थं हितं तैलं कषायमधुरैःश्रृतं । प्रच्छानैर्वाजलौकोभिः स्राव्याऽपक्वा विदारिका॥ अजकर्णैः सपालाशैर्मूलकल्कैः । प्रलेपयेत् । पक्वां विदार्य्य शस्त्रेण पटोलपिचुमन्दयोः ॥ कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् । वद्धाच चोरवृक्षस्य कषायैः खदिरस्य च ॥ व्रणं प्रक्षालयेच्छुद्धास्ततस्ता रोपयेत्पुनः । मेदोऽर्व्वुदविधानेन साधयेच्छर्करार्व्वुदं ॥ कच्छू विचर्च्चिकां पामां कुष्ठवत्समुपाचरेत् । लेपश्च शस्यते सिक्थशातान्वगौरसर्षपैः ॥ वचादार्व्वोसर्षपैर्वा तैलं वा नक्तमालजं । सारतैलमथ्याभ्यङ्गे कुर्वीत कटुकैः श्रृतं ॥ पाददार्य्यां सिरां विद्धा स्वेदाभ्यङ्गौ प्रयोजयेत्।मधूच्छिष्टवसामज्जसर्ज्जचूर्णघृतैः कृतः॥यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते । पादौ सिक्तारनालेन लेपनं ह्यलसे हितम् ॥ कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः । लाचारसोऽभया वापि कार्य्यं स्याद्रक्तमोचणं ॥ सिद्धं रसे कण्टकार्य्यास्तैलं वा सार्षपं हितं । काशीसरोचनाशिलाचूर्णैर्व्वा प्रतिसारणम् ॥ उद्धृत्य दग्ध्वा स्नेहेन जयेत्कदरसंज्ञकं । इन्द्रलुप्ते सिरां मूर्ध्नि स्निग्धस्विन्नस्य मोचयेत् ॥ कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुत्थकैः । कुटन्नटादारुकल्कैर्लेपनं वा प्रशस्यते ॥ प्रच्छयित्वावगाढं वा गुञ्जाकल्कैर्मुहुर्मुहुः । लिपनेदुपशान्त्यर्थं कुर्य्याद्वापि रसायनं ॥ मालतीकरवीराग्निनक्तमालविपाचितं । तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम्॥ अरुंषिकां हृते रक्ते सेचयेन्निम्बवारिणा । दिह्यात्सैन्धवयुक्तेन वाजिविष्टारसेन तु॥ हरितालनिशानिम्बकल्कैर्वा सपटोलजैः । यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत् ॥ सिरां दारुणके विद्धा स्निग्धस्विन्नस्य मूर्द्धनि । अवपीडं शिरोवस्तिमभ्यङ्गञ्च प्रयोजयेत् ॥ चालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥ उपरिष्टात्प्रवक्ष्यामि विधिं पलित नाशनं । मसूरिकायां कुष्ठघ्न लेपनादिक्रिया हिता ॥ पित्तश्लेष्मविसर्पोक्ता क्रिया वा सम्प्रशस्यते । जतूमणिं समुत्कृत्य मशकं तिलकालकं ॥ क्षारेण प्रदहेद्युक्त्या वह्निना वा शनैः शनैः । न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायाश्च शस्यते ॥ यथान्यायं यथाभ्यासं लालाट्यादिसिराव्यधः । घृष्ट्वा दिह्यात्त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुतां ॥ बलातिवलयष्ट्याह्वरजनीर्वा प्रलेपनं । पयस्यागुरुकालीयलेपनं वा सगैरिकं॥ क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च । कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥ यौवने डिडकास्वेष विशेषाच्छर्दनं हितं । लेपनञ्च वचारोध्रसैन्धवैः सर्षपान्वितैः ॥ कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपनं हितं । पद्मिनीकण्टके रोगेच्छर्दयेन्निम्बवारिणा ॥ तेनैव सिद्धं सक्षौद्रं सर्पिः पानं प्रदापयेत् । निम्बारग्वधयोः क्वाथो हित उत्सादने भवेत् ॥ परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् । त्रिरात्रं पञ्चरात्रं वा वातघ्नैः शाल्वणादिभिः ॥ ततोऽभ्यज्य शनैश्चर्म्म चानयेत्पीड-

येन्मणिं। प्रविष्टे च मणौ चर्म्म स्वेदयेदुपनाहनै ॥ दद्याद्वातहरान्वस्तीन् स्निग्धान्यन्नानिभोजयेत्। वपाटिकां जयेदेवं यथादोषं, चिकित्सकं ॥ निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीं। दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत ॥ परिषेके वसामज्ज शिशुमारवराहयोः। चक्रतैलं यथा योज्यं वातघ्नद्रव्यसंयुतं ॥ त्र्यहात् त्र्यहात् स्थूलतरांसन्त्यन्नाडीं प्रवेशयेत्। स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत् ॥ भित्त्वा वा सेवनीं गुह्या सद्यः चतवदाचरेत्। सन्निरुद्धगुदं रोगं वल्मीकंवह्निरोहिणीं॥ प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत्। विसर्पोक्तेन विधिना साधयेदग्निरोहिणीं॥ सन्निरुद्धगुदे योज्या निरुद्धप्रकशक्रिया। शस्त्रेणोत्कृतवल्मीकं चाराग्निभ्यां प्रसाधयेत्। विधानेनार्वुदोक्तेन शोधयित्वाच रोपयेत्। वल्मीकन्तु भवेद्यस्य नातिवृद्धममर्मजं॥ तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक्। कुलत्थिकाया मूलैश्चगुडूच्या। लवणेनचा आरेवतस्यमूलैश्च दन्तीमूलैस्तथैव च। श्यामामूलैःसपललैः शक्तु मिश्रैःप्रलेपयेत्॥ सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत्। पक्कं वा तद्विजानीयाद्गतीः सर्वा यथाक्रमम्॥ अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान्भिषक् संशोध्य दुष्टमांसानि चारेण प्रतिसारयेत् ॥ व्रणं विशुद्धं विज्ञायः रोपयेन्मतिमान्भिषक्। सुमना ग्रन्थयश्चैव भल्लातकमनः शिले ॥ कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा। एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितं ॥ पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतं। वल्मीकं यत्सशोफं स्याद्वर्ज्यं तत्तु विजानता ॥ धात्र्याः स्तन्यं शोधयित्वा वाले साध्याहिपूतना। पटोलपत्रत्रिफलारसाञ्जनविपाचितं ॥ पीतं घृतं नाशयति कृच्छ्रामप्यहि पूतनां। त्रिफलाकोलखदिरकषायं व्रणरोपणं ॥ कासीसरोचनातुत्थहरितालरसाञ्जनैः। लेपोऽम्लपिष्टो वदरीत्वग्वा सैन्धवसंयुता ॥ कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत्। चिकित्सन्मुष्ककच्छूञ्च। स्यहिपूतनपानवत् ॥ गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत्। कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्म्मणा ॥ विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः। चीरं महापञ्चमूलं मूषिकां चान्त्रवर्ज्जितां ॥ ततस्तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतं। गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात्प्रसाधयेत् ॥

## एकविंशतितमोऽध्यायः ॥

अथातः शूकरोगचिकित्सितं व्याख्यास्यामः।

संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत्। कषाये श्व व तैलञ्च कुर्व्वीत व्रणरोपणम्॥ अष्ठीलिकाञ्च लौकोभिर्या हयेल्लु शलोभिषक्। तथाचानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत्॥ स्वेदये द्ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान्। मुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धांतुरोपयेत्। तैलेन त्रिफलालोध्रतिन्दुकाम्रातकैम

तु ॥ शाययित्वा जलौकोभिरसृजीं सेचयेत्ततः। कषायैस्तेषु सिद्धञ्च तैलं रोपणमिष्यते ॥
वला तैलेन कोष्णेन मृदितं परिषेचयेत् मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ॥
संमूढपिडकां क्षिप्रं जलौकोभिरुपाचरेत्। भित्त्वा पर्यागतां चापि लेपयेत् क्षौद्रसर्पि-
षा॥ अवमन्थे गते पाकं भिन्ने तैलं विधीयते। धवाश्वकर्णपत्तङ्गसल्लकीतिन्दुकीकृतं ॥
क्रियां पुष्करिकायान्तु शीतां सर्व्वां प्रयोजयेत्। जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेच-
येत् ॥ स्पर्शहान्यां हरेद्रक्तं प्रदिह्याग्मधुरैरपि। क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥
पिडकासुत्तमाख्यासु वडिशेनोद्धरेद्भिषक् उद्धृत्य मधुसंयुक्तैः कषायैरवचूर्णयेत् ॥ रस-
क्रिया विधातव्या लिखिते शतपोनके। पृथक्पर्ण्यादिसिद्धञ्च देयं तैलमनन्तरं ॥ क्रियां
कुर्य्याद्भिषक्प्राज्ञस्त्वक्पाकस्य विसर्पवत्। रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रिया। शोधनं रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥
यथास्वं सर्पिषः पानं पथ्यञ्चापि विरेचनं। हितः शोणितमोक्षश्च यच्चापि लघु भोजनं ॥
अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकं। प्रत्याख्याय प्रकुर्वीत भिषक् सम्यक् प्रतिक्रियां॥

## द्वाविंशतिमोऽध्यायः ॥

अथातो मुखरोगचिकित्सितं व्याख्यास्यामः।

चतुर्व्विधेन स्नेहेन मधूच्छिष्टयुतेन च। वातजेऽभ्यञ्जनं कुर्य्यान्नाडीस्वेदञ्च बुद्धिमान् ॥
मतिमानोष्ठकोपे तु शाल्वणं चोपनाहने। मस्तिष्के चैव नस्ये च तैलं वातहरं हितं
श्रीवेष्टकं सर्ज्जरसं सुरदारु सगुग्गुलुः। यष्टीमधुकचूर्णन्तु विदध्यात्प्रतिसारणं ॥ पित्तरक्ता-
भिघातोत्थं जलौकोभिरुपाचरेत्। पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥ शिरो-
विरेचनं धूमः स्वेदः कवल एव च। हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ त्र्यूषणं
स्वर्ज्जिकाक्षारो यवक्षारो विडंतथा। क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणं ॥ मेदोजे स्वे-
दिते भिन्ने शोधिते ज्वलनो हितः। प्रियङ्गु त्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥ एतदोष्ठ-
प्रकोपानां साध्यानां कर्म कीर्त्तितं। दन्तमूलगतानान्तु रोगानां कर्म वक्ष्यते ॥ शीतादे
हृतरक्ते तु तोये नागरसर्षपान्। निःक्वाथ्य त्रिफलामुस्तं गण्डूषः सरसाञ्जनः ॥ प्रिय-
ङ्गवश्च मुस्तञ्च त्रिफला च प्रलेपनं। नस्यञ्च त्रिफलासिद्धं मधुकोत्पलपद्मकैः॥ दन्तपुप्पुट-
के कार्य्यं तरुणे रक्तमोक्षणं। सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणं ॥ हितः शिरोवि-
रेकश्च नस्यं स्निग्धञ्च भोजनं। विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत् ॥ रोध्रपत्तङ्ग-
यष्ट्या ह्वलाक्षाचूर्णैर्मधूत्तरैः। गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्करा॥ काकोल्या-
दौ दशक्षीरसिद्धंसर्पिश्च नस्यतः। शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥ सक्षौद्रैः शस्य-
ते लेपो गण्डूषे क्षीरिणो हिताः। सारिवोत्पलयष्ट्याह्वसावार गुरुचन्दनैः ॥ क्षौ॰ दशगु-

पे सिद्धं सर्पिर्मध्ये च पूजितं । क्रियां परिदरे कुर्य्याच्छीतादोक्ताम् विचक्षणः ॥ संशोध्यो-भयतः कार्य्यं शिरश्चोपकुशे तथा । काकोडुम्बरिकागोजीपत्रैर्विस्र.वयेदसृक् ॥ क्षौद्र-युक्तैश्च लवणैः सव्योषैःप्रतिसारयेत् । पिप्पलीसर्षपांश्चैव नागरं नैचुलं फलं ॥ सुखोदकेन संसृष्टं कवलं चापि धारयेत् । घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥ शस्त्रेण दन्तवदर्भे दन्तमूलानि शोधयेत् । ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥ उद्वृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् । क्रमिदन्तकवच्चापि विधिः कार्य्यो विजानता ॥ छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् । वचातेजोवतीपाठासर्ज्जिकायावशूकजैः ॥ क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः । पटोलत्रिफलानिम्बकषायश्चात्र धावने॥ हितः शिरोविरेकश्च धमो वैरेचनश्चयः । सामान्यं कर्म नाडीणां विशेषं चात्र मे शृणु ॥ यन्दन्तमधिजायेत नाडी तं दन्तमुद्धरेत् । छित्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥ शोधयित्वा दहेद्वापि क्षारेण ज्वलनेन वा । भिनत्त्युपेक्षिते दन्ते हनुकास्थिगतिर्ध्रुवं ॥ समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च । उद्धृतेतूत्तरे दन्ते सशूले स्थिरबन्धने ॥ रक्तातियोगात्पूर्व्वोक्ता रोगा घोरा भवन्ति हि । काणः सञ्जायते जन्तुरर्दितं चास्य जायते ॥ चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् । धावने जातिमदनस्वादुकण्टकखादिरं ॥ कषायं जातिमदनकटुकस्वादुकण्टकैः । यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत्कृतं ॥ तैलंसंशोधनं तद्धि हन्याद्दन्तगतां गतिं । कीर्त्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते॥ स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा ।निर्यूयाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः॥ स्नेहिकश्च हितो धूमो नस्यं स्निग्धञ्च भोजनं । रसो रसयवाग्व्यश्च क्षीरं सन्तानिका घृतं ॥ शिरोवस्तिर्हितं तथापि क्रमो यश्चानिलापहः । अहिं सन्द न्तमूलानि शर्करामुद्धरेद्भिषक् ॥ लाक्षाचूर्णं मधुयुतैस्ततस्ताःप्रतिसारयेत्। दन्तहर्षक्रिया वापि कुर्यान्निरवशेषतः ॥ कपालिका कृच्छ्रतमा तथाप्येषा क्रिया हिता॥जयेद्विस्रावणैः स्विन्न मचलं कृमिदन्तकं । तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥ भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः । चलमुद्धृत्य च स्थानं पिदहेच्छुपिरस्य च ॥ ततोविदारी यष्ट्याह्वशृङ्गाटककसेरुकैः । तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥ हनुमोक्षे समुद्दिष्टां कुर्य्याच्चार्दि तवत् क्रियां । फलान्यम्लानि शीताम्बु रूपान्नं दन्तधावनं॥तथातिकठिनान् भक्ष्यान्दन्तरोगी विवर्ज्जयेत् । साध्यानां दन्तरोगाणां चिकित्सितमुदीरितं जिह्वागतानां साध्यानां कम्मर्मवक्ष्यामिसिद्धये । ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितं ॥ कण्टके ष्वनिशोत्थेषु तत्कार्य्यं भिषजा भवेत् । पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते ॥ प्रतिसारणगण्डुषं नस्यञ्च मधुरं हितं । कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥ पिप्पल्यादिर्मधुयतः कार्य्यस्तु प्रतिसारणे । गृह्णीयात्कवलांश्चापि गौरसर्षपसैन्धवैः ॥ पटोलनि-

खवार्त्ताकुचारयूषैश्च भोजयेत्। उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ॥ शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत्।जिह्वागतानां कर्मोक्तं तालव्यानां प्रवक्ष्यते॥ अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकां। छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थितां ॥ नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद्भिषक्। अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च ॥ हीनच्छेदाद्भवेच्छोफो लालानिद्राभ्रमस्ततः। तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः। गलशुण्डीन्तु संच्छिद्य कुर्य्यात्प्राप्तमिमं क्रमं। मरिचातिविषापाठावचाकुष्ठकुठन्नटैः ॥ चौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत्। वचामतिविषां पाठां रास्नां कटुकरोहिणीं ॥ निःक्वाथ्य पिचुमन्दञ्च कवलं तत्र योजयेत्॥ इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः ॥ पञ्चाङ्गीङ्कारयेत्पिष्टैर्वर्त्तिं गन्धोत्तरां शुभां। ततो धूमं पिबेज्जन्तुर्द्विरह्नः कफनाशनं ॥ क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः। तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे ॥ एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि। तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनं ॥ स्नेहस्वेदौ तालुशोफे विधिश्चानिलनाशनः। कीर्त्तितं तालुजानान्तु कण्ठानां कर्म वक्ष्यते ॥ साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणं। छर्दनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥ वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत्। सुखोष्णान्स्नेहगण्डूषान्धारयेच्चाप्यभीक्ष्णशः पत्तङ्गकर्क्कराचौद्रैः पैत्तिकीं प्रतिसारयेत् ॥द्राक्षापरूषकक्वाथो हितौ च कवलग्रहे ॥ आगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ॥ श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवं ॥ नस्यकर्म्मणि योक्तव्यं तथा कवलधारणे। पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवां॥विस्राव्य कण्ट शालूकं साधयेत्तुण्डिकेरिवत्।एककालं यवान्नञ्चभुञ्जीतस्निग्धमल्पशः॥उपजिह्विकवच्चापिसाधयेद्दधिजिह्विकां।एकवृन्दन्तुविस्राव्यविधिं शोधनमाचरेत् ॥ गिलायश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्। अममर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिं ॥ वातात्सर्व्वसरं चूर्णैर्लवणैः प्रतिसारयेत्। तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः। शालराजादनैरण्डसारेङ्गुदिमधुकजाः ॥ मज्जानो गुग्गुलुध्याममांसीकालानुसारिवाः। श्रीसर्जरसशैलेयमधूच्छिष्टानि वा हरेत् ॥ तत्सर्व्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः। टुण्टुकवृन्तं सचौद्रं मतिमांस्तेन लेपयेत् ॥ एष सर्व्वसरे धूमः प्रशस्तः स्नैहिको मतः। कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥ पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः। सर्व्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥ प्रतिसारणगण्डूषधूमसंशोधनानि च। कफात्मके सर्व्वसरे विधिं कुर्य्यात्कफापहं ॥ पिबेदतिविषां पाठां मुस्तञ्च सुरदारु च ॥ रोहिणीं कटुकाख्याञ्च कुटजस्य फलानि च ॥ गवां मूत्रेण मनुजो भागैर्धरणसम्मितैः। एष सर्व्वान्कफकृतान्रोगान्योगोऽपकर्षति ॥ क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः। विद-

ध्यातत्वप्रतान्वोष्य दोषं तैलघृतैरपि॥रोगाणां मुखजातानांसाध्यानां कर्म्मकीर्त्तितं।असाध्यानपि वक्ष्यन्ते रोगा ये यत्रकीर्त्तिताः॥ओष्ठप्रकोपा वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः।दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ ॥ दन्तेषु च नसिध्यन्ति श्यावदालनभञ्जनाः।जिह्वागतेष्वलासस्तु तालव्येष्वर्बुदं तथा॥ स्वरघ्नो वलयो वृन्दो बलासश्च विदारिका : गलौघो मांसतानश्च शतघ्नी रोहिणी गले॥ असाध्याः कीर्त्तिता ह्येतेरोगे यन दशैव च । तेषां चापि क्रियां वैद्यःप्रत्याख्यायसमाचरेत् ॥

## त्रयोविंशतितमोऽध्यायः ॥

अथातः शोफानां चिकित्सितं व्याख्यास्यामः ।

षड्विधोऽवयवसमुत्थः शोफोऽभिहितोलक्षणतः । प्रतीकारश्च सर्व्वसरस्तु पञ्चविधः॥ तद्यथा । वातपित्तश्लेष्मसन्निपातविष निमित्तः ॥ तत्रापि तर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीरस्य वातिमात्रमम्लमुपसेवमानस्य मृत्पङ्कलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्मसेवनाद्विरुद्धाहारसेवनाद्व्यश्वोष्ट्ररथपदातिसङ्क्षोभणाद्दोषा धातून् प्रदूष्यश्वयथुमापादयन्त्यखिले शरीरे॥ तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थित स्तोदादयश्चात्र वेदनाविशेषाः ॥ पित्तश्वयथुः पीतो रक्तो वा शीघ्रानुसार्य्योषचोषादयश्चात्र वेदनाविशेषाः॥ श्लेष्माश्वयथुः पाण्डुशुक्लो वा स्निग्धःकठिनः शीतो मन्दानुसारी कण्ड्वादयश्चात्रवेदना विशेषाः ॥ सन्निपातश्वयथुः सर्व्ववर्णवेदनः ॥ विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात्प्रकोथोदकावगाहनात्सविषमत्वदिग्धचूर्णो नावचूर्णनाद्वा सविषमूत्रपुरीष शुक्रस्पृष्टानांतृणकाष्ठादीनां संस्पर्शनात् स तु मृदुः चिप्रोत्थानोऽवलम्बी चलो वा दाहपाकप्रायश्चभवति॥ भवन्ति चात्र॥ दोषाः श्वयथुमूर्ध्वंहि कुर्व्वन्त्यामाशयस्थिताः । पक्वाशयस्था मध्ये च वर्चः स्थानगतास्त्वधः कृत्स्नं देहमनुप्राप्ताः कुर्य्युः सर्वसरं तथा । श्वयथुर्मध्यदेशे यः स कष्टः सर्वगश्च यः ॥ अर्द्धाङ्गेऽरिष्टभूतश्च यश्चोर्द्धं परिसर्पति । श्वासः पिपासा दौर्ब्बल्यं ज्वरश्छर्दिररोचकः॥ हिक्कातीसारकासश्च शूनं सङ्कपयन्तिहि । सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजं॥ शोफिनः सर्वे एव परिहरेयुरम्ललवणदधिगुडवसापयस्तैलघृतपिष्टमयगुरूणि॥ तत्र वातश्वयथौ त्रैवृतमेरण्डतैलं वा मास मर्द्धं मासं वा पाययेत् । न्यग्रोधादिककषायसिद्धं सर्पिः पित्तश्वयथौ आरग्वधादि सिद्धं श्लेष्मश्वयथौ।सन्निपातश्वयथौ स्नूही चीरपात्रं द्वादशभिरम्लपात्रैः प्रतिसंसृष्टं दन्तीप्रतिवापं सर्पिः पाचयित्वा पाययेत् । विषनिमित्ते कल्पेषु प्रतिकारः ॥ अथातः सामान्यचिकित्सितं व्याख्यास्यामः॥ तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु तु ततोऽन्यतममुपयुज्यमानं श्वयथु-

मपहन्ति। मूत्रवर्त्तिक्रियां वा सेवयेत्। नवायसं वाहरहर्मधुना। विडङ्गातिविषाकुलजफलभद्रदारुनागरमरिचचूर्णं वा धरणमुष्णाम्बुना। त्रिकटुक्षारायस्चूर्णानि वा त्रिफलाकषायेण मूत्रं वा तुल्यक्षीरंहरितकीं वा तुल्यगुड़ामुपयुञ्जीत।देवदारु शुण्ठीं वा गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा तुल्यगुडं शृङ्गवेरं वा वर्षाभूकषायंमूलकल्कं वासशृङ्गवेरं पयोऽनुपानमहरहर्मासं।व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा मुद्गोल्लुम्बान् भक्षयेत्॥पिप्पलीपिप्पलीमूलं चव्यचित्रकमयूरवर्षाभूसिद्धं वा क्षीरंपिवेत्। महौषधसुरङ्गीमूलसिद्धं वा।त्रिकटूकैरण्डमूलश्यामामासलसिद्धं वा।वर्षाभूशृङ्गवेरसहादेवदारुसिद्धं वा। तथालावुविभीतकफलकल्कं वा तण्डुलाम्बुना॥ क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणनाल्पस्नेहेन भोजयेद्यवान्नं गोधूमान्नं वा। वृक्षकार्कनक्तमालनिम्ब वर्षाभूक्वाथैश्च परिषेकः सर्षपसौवर्चलसैन्धवशार्ङ्गेष्टाभिश्च प्रदेहः कार्य्यः। यथादोषञ्च विरेचनास्थापनानि तीक्ष्णान्यजस्रमुपसेवेत् स्नेहस्वेदोपनाहांश्च शिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति॥ भवति चात्र॥ पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च। स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्ज्जयेत्॥

## चतुर्विंशतितमोऽध्यायः॥

अथातोऽनागतावाधप्रतिषेधनीयंचिकित्सितं व्याख्यास्यामः। उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता।धीमता यदनुष्ठेयं तत्सर्व्वं संप्रवक्ष्यते॥तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतं। कनिष्ठिकापरिणाहमृज्वग्रथितमव्रणं॥ अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्।अवेक्ष्यर्तुञ्च दोषञ्चरसं वीर्य्यञ्च योजयेत्।कषायं मधुरं तिक्तं कटकं प्रातरुत्थितः। निम्बश्च तिक्तकेश्रेष्टः कषायेखदिरस्तथा॥मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा। क्षौद्रव्योषत्रिवर्गाक्तं सक्षतैलं सैन्धवेन च॥चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्। एकैकं घर्षयेद् दन्तं मृदुना कूर्च्चकेन च॥ दन्तशोधनचूर्णेन दन्तमांसान्यवाधयन्। तद्दौर्गन्ध्योपदेहौतु श्लेष्माणं चापकर्षति॥ वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च। न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे॥ अथास्यपाके श्वासे च कासहिक्कावमीषु च दुर्बलो जीर्णभक्तश्च मूर्च्छार्त्तो मदपीडितः॥ शिरो रुगार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः। अर्दिती कर्णशूलीच दन्तरोगी च मानवः। जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च॥ तन्मूलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलं। मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखं॥ दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणं। क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः॥ भिल्लोदककषायेण तथैवामलकस्य वा। प्रक्षालयेन्मुखं नेत्रे स्वस्थ शीतोदकेन वा॥ निलीकां मुखशोषञ्च पिडकां व्यङ्गमेव च। रक्तपित्तकृतान् रोगा न्स-

क्ष एव विनाशयेत् ॥ सुखं लघु निरीक्षेत दृढं पश्यति चक्षुषा। मतं स्रोतोऽञ्जनं श्रेष्ठं-
विशुद्धं सिन्धुसम्भवं॥ दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहम्। अक्ष्णोरूपावहञ्चैव स-
हते मारुतातपौ॥ न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत्। भुक्तवान् शिरसा स्नातः
श्रान्तश्छर्दनवाहनैः॥ रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च। कर्पूरजातिकक्कोल-
लवङ्गकटुकाह्वयैः॥ सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभं। सुखवैशद्यसौगन्ध्यका-
न्तिसौष्ठवकारकं॥ हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनं। प्रसेकसमनं हृद्यं गलामयविनाशनं
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे॥ रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनां।
रुक्षदुर्वलयार्त्तानां न हितं चास्यशोषिणां॥ शिरोगतांस्तथा रोगान् शिरोभ्यङ्गोऽपक-
र्षति॥ केशानां मार्दवंदैर्घ्यं वहुत्वं स्निग्धकृष्णतां। करोति शिरसस्तृप्तिं सुत्वक्कमपि
चालनं॥ सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणं। मधुकं क्षीरशुक्ला च सरलं देवदारु
च॥ क्षुद्रकं पञ्चनामानं समभागानि संहरेत्। तेषां कल्ककषायाभ्यां चक्रतैलं विपाच-
येत्॥ सदैव शीतलं जन्तोर्मूर्ध्नि तैलं प्रदापयेत्। केशप्रसाधनी केश्या रजोजन्तुमलाप-
हा॥ हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणं। अभ्यङ्गो मार्दवकरः कफवातनिरोधनः॥
धातूनां पुष्टिजननो मृजावर्णबलप्रदः। सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः॥ क्ष-
ताग्निदग्धाभिहितविघृष्टानां रुजापहः। जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते। शिरामुखैरोमकूपैर्धमनीभिश्च तर्पयन्॥ शरीर
वलमाधत्ते युक्तः स्नेहो ऽवगाहने। तत्र प्रकृतिसात्म्यर्त्तुदेशदोषविकारवित्।
तैलं घृतं वा मतिमान्युञ्ज्यादभ्यङ्गसेकयोः। केवलं सामदोषेषु न कथंचन योजयेत्॥
तरुणज्वर्य्यजीर्णि च नाभ्यक्तव्यौ कथंचन। तथाविरक्तो वान्तश्च निरूढो यश्च मानवः॥
पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापिवा। शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो
गदाः॥ सन्तर्पणसमुत्थानां रोगाणां नैवकारयेत्। शरीरायासजननं कर्म व्यायामसंज्ञि-
तं॥ तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः। शरीरोपचयः कान्तिर्गात्राणां सुवि-
भक्तता॥ दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा। श्रमक्लमपिपासोष्णशीतादीनां स-
हिष्णुता॥ आरोग्यं चापि परमं व्यायामादुपजायते। न चास्ति सदृशं तेन किञ्चित्-
स्थौल्यापकर्षणं॥ नच व्यायामिनं मर्त्यमर्दयन्त्यरयो भयात्। नचैनं सहसाक्रम्य जरा
समधिरोहति॥ स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च। व्यायामक्षुण्णगात्रस्य प-
द्भ्यामुद्वर्त्तितस्य च॥ व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव। वयोरूपगुणैर्हीनमपि
कुर्य्यात्सुदर्शनं व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनं। विदग्धमविदग्धं वा नि-
र्दोषं परिपच्यते॥ व्यायामो हि सदा पथ्यो वलिनांस्निग्धभोजिनां। स च शीते वसन्ते च
तेषां पथ्यतमः स्मृतः॥ सर्व्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः। वलस्यार्द्धेन क-

र्त्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥ हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते। व्यायामं कुर्वतो जन्तोस्तद्बलार्द्धस्य लक्षणं ॥ वयोबलशरीराणि देशकालाशनानि च। समीक्ष्य कुर्य्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥ क्षयस्तृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः। कासशोषज्वरश्वासा अतिव्यायामसम्भवाः॥रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः॥ भुक्तवान्स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्ज्जयेत् ॥ उद्वर्त्तनं वातहरं कफमेदोविलापनं ॥ स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परं ॥ सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनं। उद्वर्षणोत्सादनाभ्यां जायेयातामसंशयं उत्सादनाद्भवेत् स्त्रीणां विशेषात्कान्तिमद्वपुः। प्रहर्षसौभाग्यमृजालाघवादि गुणान्वितं ॥ उद्वर्षणन्तु विज्ञेयं कण्डूकोठानिलापहं। ऊर्व्वीः सञ्जनयत्याशुफेनकः स्थैर्य्यलाघवे ॥ कण्डूकोठानिलस्तम्भमलरोगापहश्च सः। तेजनं त्वग्गतस्याग्नेः सिरामुखविरेचनं ॥ उद्वर्षणत्त्विष्टिकया कण्डूकोठविनाशनं। निद्रादाहश्रमहरं स्वेदकण्डूतृषापहं ॥ हृद्यं मलहरं श्रेष्ठं सर्वेन्द्रियविशोधनं। तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनं ॥ रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनं। उष्णेन शिरसः स्नानमहितञ्चक्षुषः सदा ॥ शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत्। श्लेषमारुतकोपे तु ज्ञात्वा व्याधिबलाबलं ॥ काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत्। अतिशीताम्बुशीते च श्लेषमारुतकोपनम् ॥ अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनं। तच्चातिसारज्वरितकर्णशूलानिलार्त्तिषु ॥ आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितं। सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनं ॥ स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनं ॥ स्नानंयेषांनिषिद्धन्तु तेषामप्यनुलेपनं रक्षोघ्नमथ चौजस्य सौभाग्यकरमुत्तमं।सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनम्॥मुखालेपाद्दृढं चक्षुःपीनगण्डं तथाननं॥अव्यङ्गपिड़कं कान्तं भवत्यम्बुजसन्निभं ॥ पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलं।नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकं॥यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनं। देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनम्॥आहारः प्रीणनः सद्योबलकृद्देहधारकः। आयुस्तेजः समुत्साहस्मृत्योजोऽग्निविवर्द्धनं ॥ पादप्रक्षालनं पादमलरोगश्रमापहं। चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनं ॥ निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत्। पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदाहितः ॥ पादरोगहरं वृष्यं रजोघ्नं प्रीतिवर्द्धनं। सुखप्रचारमौजस्यं सदापादत्रधारणं ॥ अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्। पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणां ।। पापोपशमनं केशनखरोमापमार्ज्जनं। हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनं ॥ वाणवारं मृजावर्णतेजोवलविवर्द्धनं। पवित्रं केश्यमुष्णीषं वातातपरजोऽपहं ॥ वर्षानिलरजोघर्म्महिमादीनां निवारणं। वर्ण्यं चक्षुष्यमोजस्यं शङ्करं छत्रधारणं ॥ शुनः सरीसृपव्यालविषाणिभ्यो भयापहं। श्रमस्खलनदोषघ्नं स्थविरे चप्रशस्यते ॥ सत्वोत्साहबलस्थैर्य्यधैर्य्य-

वीर्य्यविवर्द्धनम् । अवष्टम्भाकरश्चापि भयघ्नं दण्डधारणं ॥ आस्या वर्णकफस्थौल्यसौकु-
मार्य्यकरी सुखा ॥ अध्वा वर्णकफस्थौल्यसौकुमार्य्यविनाशनः ॥ अत्यध्वा विपरीतोऽ-
स्माज्जरादौर्व्वल्यकृच्च सः । यत्तु चं क्रमणं नातिदेहपीडाकरं भवेत् ॥ यदायुर्बलमे-
धाग्निप्रदमिन्द्रियबोधनं । श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदं ॥ सुखं शय्यासनं दुःखं
विपरीतगुणं मतं । व्यालव्यजनमोजस्यं मक्षिकादीनपोहति । शोषदाहश्रमस्वेदमू-
र्च्छाघ्नो व्यजनानिलः ॥ प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहं ॥ संवाहन मांसरक्तत्व-
क्प्रसादकरं सुखं । प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत् ॥ स्वेदमूर्च्छापिपासाघ्न-
मप्रवातमतोऽन्यथा । सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ॥ निवातं ह्यायुषे सेव्य-
मारोग्याय च सर्वदा । आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ॥ दाहवैव-
र्ण्यकारी च छाया चैतानपोहति । अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ॥
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः ॥ पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रितां । करो-
ति साधुसाम्यञ्च निद्रा काले निषेविता ॥ तत्रादित एव नीचनखरोम्णा शुचिनाशुक्ल-
वाससा लघूष्णीष च्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्व्वाभिभाषिणा
बन्धूभूतेन भूतानान्तु गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खलूपचरितव्यं तदपि न
रात्रौ न केशास्थिकण्टकाश्मतुषभस्मोत्कर कपालाङ्गारामेध्यस्थानवलिभूमिषु न विष-
मेन्द्रकील चतुष्पथश्वभ्राणामुपरिष्टात्॥न राजद्विष्टपरुषपैशुन्यानृतानिवेदत् ! नदेवब्रा-
ह्मणपितृपरिवारांश्च न नरेंद्रद्विष्टोन्मत्तपतितक्षुद्रनी चाचारानुपासीत ॥ वृक्षपर्व्वत प्र-
पातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानि परिहरेत् पूर्णनदीसमुद्रा विदितवल
श्वभ्रकूपावतरणानि ॥ भिन्नशून्यागारश्मशानविजनारण्यरासाग्निसंभ्रमव्यालभुजङ्गकी-
ट सेवाग्रामाघातकलहशस्त्रसन्निपाताग्निसंभ्रमव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥ ना-
ग्निगोगुरुब्राह्मणप्रेङ्खादम्पत्यन्तरेणाभियायात् । न शवमनुयायात् । देवगोब्राह्मणचै
त्यध्वजरोगिपतितपापकारिणाञ्च छायां नाक्रमेत । नास्तं गच्छन्तमुद्यन्तंवादित्यं वी-
क्षेत॥गान्धयन्तीं परशस्यं वा चरन्तीं परस्मै न कस्मैचिदाचक्षीतनचोल्कापातेन्द्रधनूंषि।
नाग्निं मुखेनोपधमेत् । नापो भूमिं वा पाणिपादेनाभिहन्यात् ॥ न वेगान्धारयेत् ।
न वहिर्वेगान् ग्रामनगरदेवतायतनश्मशान चतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजन्न
प्रकाशं न वाय्वग्निसलिलसोमार्कं गोगुरु प्रतिमुखम् ॥ न भूमिं विलिखेत् । नासम्वृत
मुखः सदसि जृम्भोद्गार श्वासक्षवथूनुत्सृजेत् । न पर्य्यस्तिकावष्टम्भपादप्रसारणानिगु-
रुसन्निधौकुर्य्यात्॥नबालकर्णनासास्रोतोदशनविवरण्याभिकुष्णीयात्।नवीजयेत्केशमुख-
नखरवस्त्रगात्राणि । न गात्रनखवक्त्रवादित्रं कुर्य्यात् ॥ न काष्ठलोष्टतृणादीन
भिहन्याच्छिन्द्याद्वा ॥ न प्रतिवातातपं सेवेत न भुक्तमात्रोऽग्निमुपासीत नोत्कटुक

स्तिष्ठेत् । नालपकाष्ठासन मध्यासीत । न ग्रीवां विषमं धारयेत्। नविषमकायः क्रियां भजेद्भुञ्जीत वा । न प्रततमीक्षेत विशेषाज्ज्योतिभास्करसूक्ष्मचलभ्रान्तानि । न भारं शिरसा वहेत् । न स्वप्नजागरणशयनासनचंक्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाषव्यवायव्यायामादीनुचितानप्यतिसेवेत ॥ उचितादप्यहितात्क्रमशोविरमेत् हितमनुचितमप्यासेवेत क्रमशो न चैकान्ततः पादहीनात् ॥ नावाक्शिराः शयीत न भिन्नपात्रे नाञ्जलिपुटे नापः पिवेत् । काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्। ग्रामगणगणिकापणिकशठपतितभोजनानि परिहरेत्। शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसान्यान्येवङ्गुणान्यपि वासम्भूयदत्तानि तान्यपि मक्षिकावालोपहतानि। नाप्रक्षालित पाणिपादौ भुञ्जीत मूत्रोच्चारपीडितौ न सन्ध्ययोर्नापाश्रितो नातीतकालं हीनमतिमात्रञ्चेति न भुञ्जीतोद्धृतस्नेहं ॥ नोदके पश्येदात्मानं न नग्नः प्रविशेज्जलं। न नक्तं दधि भुञ्जित न वाप्यघृतशर्करं॥ नामुद्गयूषं नाक्षौद्रं नो ष्णं नामलकैर्विना। अन्यथा कुष्ठवीसर्पादिं जनयेत् । द्यूतम द्यातिसेवाप्रतिभूसाक्षित्वसमाह्वानगोष्ठीवादि त्राणि न सेवेत। स्रजञ्छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत्। ब्राह्मणमग्निं गाश्च नोच्छिष्टः स्पृशेत्॥ भवन्ति चात्र॥ मुखमात्रं समासेन सद्वृत्तस्ये तदीरितं। आरोग्य मायुरर्थो वा नासङ्गिः प्राप्यते नृभिः॥ यस्मिन्यस्मिन्नृतौये ये दोषा कुप्यन्ति देहिनां। तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥ वर्षासु न पिवेत्तोयं पिवेच्छरदि मात्रया। वर्षासु चतुरो मासान्मात्रावदुदकं पिवेत् ॥ उष्णे हैमे वसन्ते च कामं ग्रीष्मे तु शीतलं ॥ हेमन्ते च वसन्ते चसोष्णरिष्टौ पिवेन्नरः ॥ शृतशीतं पिवेत् ग्रीष्मे प्रावृटकाले रसं पिवेत् । यूषं वर्षति नस्यान्ते प्रपिवेच्छीतलं जलंस्नस्य एवमतोऽन्यस्तु दोषाहरमतानुगः । स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतं ॥ पिवेदग्निविवृद्ध्यर्थं न च वेगान्विधारयेत्। अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥ प्रावृटशरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत्। कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे शस्यते त्रिष्वपि सदा व्यायामो दोषनाशन.। भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रकुप्यति॥ उत्सर्गमैथुनाहारशोधने स्यात्तु तन्मनाः। नेच्छेद्रोगभयात्प्राज्ञः पीडां वा कायमानसीं॥ अतिस्त्रीसम्प्रयोगाच्च रक्षेदात्मानमात्मवान् । शूलकासज्वरश्वासकार्श्य पाण्ड्वामयक्षयाः॥अतिव्यवायाज्जायन्ते रोगश्चाक्षेपकादयः। आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विता॥स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयुताः।त्रिभिस्त्रिभिरहोभिर्हि समीयात्प्रमदां नरः॥सर्व्वेषवृतुषु घर्म्मेषुपक्षात्पक्षात्त्यजेत् वुधः।रजस्वलामकामांश्च मलिनामप्रियं तथा॥वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपोडितां। हीनाङ्गीं गर्भिणीं द्वेष्यां योनि दोषसम·

न्विता ॥ सगोत्रांगुरुपत्नीञ्चतथा प्रव्रजितामपि । सन्ध्यापर्व्वस्वगम्यांचनोपयात्प्रमदां नरः ॥ गो सर्गे चार्द्ध रात्रे च तथामध्यन्दिनेषु च । लज्जासमावहे देशे विवृतेऽशुद्ध एव च ॥ क्षुधितोव्याधितश्चैवक्षु ब्धपित्तश्च मानवः । वातः विण्मूत्रवेगीच पिपासुरतिदुर्ब्बल. ॥ तिर्य्यग्योनावयोनौ च प्राप्तशुक्रविधारणं । दुष्टयोनौ वितेगन्तु बलवानपिवर्जयेत् ॥ रेतसश्चातिमात्रन्तु मूत्राबरणमेव च । स्थितावुत्तानशयने विशेषेणैव गर्हितं॥क्रीडायामपि मेधावी हितार्थो परिवर्जयेत्। रजस्वलांप्राप्तवतो नरस्यानियतात्मनः ॥ दृष्ट्यायुस्तेजसो हानिरधर्म्मश्च ततो भवेत् । लिङ्गिनींगुरुपत्नीच सु गोत्रामथ पर्वसु॥वृद्धांच सन्ध्ययोश्चापि गच्छतो जीवितक्षयः।गर्भिण्यांगर्भपीडा स्याद्व्याधितायां बलक्षयः॥हीनांङ्गीं मलिनां द्वेषां कामवन्ध्यमसं वृते। देशेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत् । क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः । स्थितस्य हानिं शुक्रस्य वायोः कोपभविन्दन्ति॥अति प्रसङ्गाद्भवति शोषः शुक्रक्षयावहः । व्याधितस्य रुजा प्लीहा मृत्युर्मूर्च्छा च जायते ॥ प्रत्यूषस्यर्द्धरात्रे च घातपित्ते प्रकुप्यतः । तिर्य्यग्योनावयोनौ च दुष्टयौनौ तथैव च ॥ उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः । उच्चारिते मूत्रिते च रेतसश्च विधारणे ॥ उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्यास्तु सम्भवः । सर्व्वं परिहरेत्तस्मादेतल्लोकद्वये हितं ॥ शुक्रं चोपस्थितं मोहान्न सन्धार्य्यं कथञ्चन । वयोरूपगुणोपेतां तुल्यशीलां गुणान्वितां ॥ अभिकामोऽभिकामान्तु हृष्टो हृष्टामलंकृतांसेवे तप्रमदां युक्त्या वाजीकरणवृंहितः॥भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च । स्नानं खव्यजनं स्वप्नो व्यवायान्ते हितानि तु ॥

## पञ्चविंशतितमोऽध्यायः ॥

### अथातो मिश्रकचिकित्सितं व्याख्यास्यामः॥

पाल्यामयास्तु विस्राव्या इत्युक्तं प्राग्निबोधतान्।परिपोटस्त्व थोत्पात उन्मन्थोदुःखवर्द्धनः पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः । सौकुमार्य्याच्चिरोत्सृष्ट सहसाभिप्रवर्द्धिते ॥ कर्णशोफो भवेत्पाल्यां सरुजः परिपोटवान् । कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ॥ गुर्वाभरणसंयोगात्ताडेनोद्धृषणादपि । शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वितः ॥ रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदो मतः । बलाद्वर्द्धयतः कर्णं पाल्यां वायुः प्रकुप्यति ॥ गृहीत्वा सकफं कुर्य्याच्छोफं तद्वर्णवेदनं । उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वितः । शोफो भवति पाकश्चत्वक्स्थोऽसौ दुःखवर्द्धनः ॥ कफासृक्कृमयः कुर्य्युः सर्षपाभा विकारिणीः । स्राविणीः पिड़काःपाल्यां कण्डूदाहरुगन्विताः ॥ कफासृक्कृमिसम्भूत. सविसर्पान्वितस्ततः । लिह्यात्स-

शष्कुली पालीं परिलेहीति स स्मृतः ॥ पाल्यामया ह्यमी घोरा नरस्याप्रतिकारिणः। मिथ्याहारविहारस्य पालिं हिंस्युरुपेक्षिताः॥ तस्मादाशु भिषक्तेषु स्नेहादिक्रममाचरेत् तथाभ्यङ्गप रीषेकप्रदेहासृग्विमोक्षणं ॥ सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जनं प्रति खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभिः ॥ सुपिष्टैः साश्वगन्धैश्च मूलकावलगुजैः फलैः सर्पिस्तैलवसामज्जमधूच्छिष्टानि पाचयेत् ॥ सचोराण्यथ तैः पालिं प्र दिह्यात्परिपोट-के। मञ्जिष्ठातिलयष्ट्याह्वसारिवोत्पलपद्मकैः ॥ सरोध्रैः सकदम्बैश्च वलाजम्ब्वाम्रपल्ल-वैः ॥ सिद्ध धान्याम्लसंयुक्तं तैलमुत्पातनाशनम्॥तालपत्र्यश्वगन्धार्कवाकुचीफलसैन्धवैः। तैलं कुलीरगोधाभ्यां वसया सह पाचितं ॥ सरलालाङ्गलीभ्याश्च हितमुन्मन्थनाशनं तथाश्म न्तकजम्ब्वाम्रपत्रक्काथेन सेचनं॥प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयैः। चूर्णै रुद्व-र्त्तनैः पालीं तैलाक्तामवचूर्णयेत् ॥ लाक्षाविडङ्गकल्केन तैलं पक्वावचारयेत्त। स्विन्नां गोमयपिण्डेन प्रदिह्यात्परलेहिके ॥ पिष्टैर्विडङ्गैरथ वा त्रिवृच्छ्यामार्कसंयुतैः। कर-ञ्जेङ्गुदिवीजैर्वा कुटजारग्वधायुतैः ॥ सर्वैर्वा सार्षपं तैलं सिद्धं मरिचसंयुतं। सनिम्बपत्रै रभ्यङ्गे मधूच्छिष्टान्वितं हितं ॥ पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च। पुष्ट्यर्थं मा-र्दवार्थञ्च कुर्य्यादभ्यञ्जनं हितं॥ लोपाकानूपमज्जानं वसां तैलं नवं घृतं। पचेद्दशगुणं क्षी-रमावाप्य मधुरं गणम्॥अपामार्गाश्वगन्धे चतथा लाक्षारसं शुभं। तत्सिद्धं परिपूतञ्च स्व नुगुप्तं निधापयेत् ॥ तेनाभ्यञ्ज्यात्सदापालिं सुस्विन्नामतिमर्दितां। एतेन पाल्यो वर्द्धन्ते निरुजो निरुपद्रवाः ॥ स्थिराः पुष्टाःसमाःस्निग्धा जायन्ते भूषणक्षमाः। नीलीदलं भृङ्ग-रजोर्जुनत्वक्पिण्डीतकं कृष्णमयोरजश्च। वीजोद्भवं साहचरञ्च पुष्पं पथ्याञ्चधात्रीसहितं विचूर्ण्य ॥ एकीकृतं सर्वमिदं प्रमाय पङ्केन तुल्यं नलिनीभवेन। संयोज्य पश्चं कलशे निधाय लौहे घटे सद्मनि सापिधाने॥ अनेन तैलं विपचेद्विमिश्रं रसेन भृङ्गत्रिफलाभ-वेन। आसन्नपाके परिरक्षणार्थं पत्रं बलाकाभवमाक्षिपेच्च॥ भवेद्यदा तद्भ्रमराङ्गनी लं तदा विपक्वं विनिधाय पात्रं। कृष्णायसे मासमवस्थितंतदभ्यङ्गयोगात्पलितानि ह-न्यात् ॥ सैरीयजम्ब्वर्ज्जुनकाश्मरीजं पुष्पं तिलान्मार्कवचूतवीजे। पुनर्नवाकर्दमकण्टका र्य्यौ कासीसपिण्डीतकवीजसारं॥ फलत्रयं लोहरजोऽञ्जनञ्च यष्ट्याह्वयं नीरजसारिवे च पिष्ट्वाथ सर्व्वं सहमोदयन्त्या साराम्भसा वीजकसम्भवेन ॥ साराम्भसः सप्तभिरेव पश्चात्प्र स्थैः समालोड्य दशाहगुप्तं। लौहे सुपात्रे विनिधाय तैलं मक्षोद्भवं तच्च पचेत्प्रयत्नात् ॥ पक्वञ्च लौहेऽभिनवे निधाय नस्यं विदध्यात्परिशुद्धकायः। अभ्यङ्गयोगैश्चनियुज्यमानं भु-ञ्जीत माषान् कृशरामथो वा॥ मासोपरिष्टाद्घनकुञ्चिताग्राः केशा भवन्ति भ्रमराञ्ज-नाभाः। केशास्तथान्ये खलितौ भवेयुर्जरा न चैनं सहसाभ्युपैति॥ बलं परं सम्भवतीन्द्रि याणां भवेच्च वक्त्रं वलिभिर्विमुक्तं। नाकामिनेऽनर्थिनि नाकृताय नैवारये तैलमिदं

प्रदेयं ॥ लाक्षारोध्रं द्वे हरिद्रे शिलाले कुष्ठं नागं गैरिकावर्णकाश्च॥ मञ्जिष्ठोग्र स्यात्सुराष्ट्रोद्भवा च पत्तङ्गो वैरोचनं चोञ्जनञ्च ॥ हेमाङ्गत्वक्पाण्डुपत्रं वटस्य कालीयं स्यात् पद्मकं पद्ममध्यं । रक्तं श्वेतं चन्दनं पारदश्च काकोल्यादिः क्षीरपिष्टश्च वर्गः ॥ मेदोमज्ज्ञासिक्थकङ्गीघृतञ्चदुग्धं क्वाथः क्षीरिणाश्च द्रुमाणां । एतत्सर्व्वंपक्वमेकघ्यतस्तु वक्त्राभ्यङ्गे सर्पिरुक्तं प्रधानं ॥ हन्याद्दाङ्गं नीलिकाञ्चातिवृद्धां वक्त्रेजाताः स्फोटिकाश्चापिकाश्चित् । पद्माकारं निर्व्वलीकञ्च वक्त्रं कुर्य्यादेतत्पीनगण्डं मनोज्ञं ॥ राज्ञामेतद्योषितां चापि नित्यं कुर्य्याद्वैद्यस्त्वप्रमानां नृणांच । कुष्ठघ्नं वै सर्पिरेतत प्रधानं येषां पादे सन्ति वैपादिकाश्च ॥ हरी तकोचूर्णमरिष्ठपत्रं।चूतत्वचं दाडिमपुष्पवृन्तं पत्तञ्चदद्यान्मदयन्तिकाया लेपाङ्गरागो नरदेवयोग्यः ॥

## षड्विंशतितमोऽध्यायः ॥

अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः ।

काल्यस्योदग्रवयसो वाजीकरणसेविनः सर्व्वेष्वृतुष्वहरहर्व्यवायो । न निवारितः स्थविराणां रिरंसूना स्त्रीणां वाल्लभ्यमिच्छतां । योषित्प्रसङ्गात्क्षीणानां क्लीवानमल्परेतसाम् । विलासिनःमर्थवतांरूपयौवनशालिनाम्।नृणाञ्च बहुभार्य्याणां योगावाजीकरा हिताः॥ सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान् । नारीस्तर्पयते तेन वाजीकरणमुच्यते॥भोजनानि विचित्राणि पानानि विविधानि ।च वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा ॥ यामिनी सेन्दुतिलका कामिनी नवयौवना । गीतं श्रोतमनोहारि ताम्बूलं मदिराः स्रजः॥मनसश्चाप्रतिघातोवाजीकुर्व्वन्ति मानवं । तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ॥ द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतं । कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः॥सौम्यधातुक्षयो दृष्टः क्लैव्यंतदपरं स्मृतम् । अतिव्यवायशीलो यो नच वाजीक्रियारतः ॥ ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकं । महता मेढ्ररोगेण मर्म्मच्छेदेन वा पुनः ॥ क्लैव्यमितच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजं । जन्मप्रभृति यः क्लीवः क्लैव्यं तत्सहजंस्मृतं॥बलिनः क्षुब्धमनसो विरोधात् ब्रह्मचर्य्यतः । षष्ठ क्लैव्यंमतं तत्तु स्थिरशुक्रनिमित्तजम् ॥ असाध्यं सहजं क्लैव्यं मर्मच्छेदाच्च यद्भवेत्। साध्यानामितरेषान्तु कार्य्यो हेतुविपर्य्ययः ॥ विधिर्वाजिकरो यस्तु तं प्रवक्ष्याम्यतः परं। तिलमाषविदारीणां शालीनां चूर्णमेव वा ॥ पौण्ड्रकेक्षुरसेनार्द्रं मर्दितं सैन्धवान्वितम् ।वराहमेदसा युक्तां घृतेनोत्कारिकां पचेत् ॥ तां भक्षयित्वा पुरुषो गच्छेत्तुप्रमदाशतं । वस्ताण्डसिद्धे पयसि भावितानशक्तत्तिलान् ॥ शिशुमारवसापक्वाः शष्कुल्यस्तैस्तिलैः क्षताः ।।यः खादेत्स पुमान् गच्छेत् स्त्रीणांशतमपूर्व्ववत् । पिप्पलीलवणोपेतं वस्ताण्डंक्षीरसर्पिषा ।साधितं भक्षयेद्यस्तु

स गच्छेत्प्रमदाशतं॥ पिप्पलीमाषशालीनां यवगोधूमयोस्तथा। चूर्णभागैस्समैस्तैस्तु घृते पूपालिकां पचेत्॥ तां भक्षयित्वा पीत्वातु शर्करामधुरं पयः। नरश्चटकवद्गच्छेद्दशवारान्निरन्तरं॥ चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितं। सर्पिर्मधुयुतं लीढ्वादश स्त्रीरधिगच्छति॥ एवमामलकं चूर्णं स्वरसेनैव भावितं। शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्॥ एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति॥ पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते॥ शिशुमारस्य वा खादेत्ते तुवाजीकरे भृशं। कुलीरकूर्मनक्राणामण्डान्येवंतु भक्षयेत्॥ महिषर्षभवस्तानां पिबेच्छुक्राणि वा नरः। अश्वत्थफलमूलत्वक् शुङ्गासिद्धं पयो नरः॥ पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति। विदारिमूलकल्कन्तु घृतेन पयसा नरः॥ उडुम्बरसमं पीत्वा वृद्धोऽपि तरुणायते। माषाणां पलमेकन्तु संयुक्तं क्षौद्रसर्पिषा॥ अवलिह्य पयः पीत्वा तेन वाजीभवेन्नरः। क्षीरपक्वांस्तु गोधूमानात्मगुप्ताफलैः सह॥ शीतान्घृतयुतान्खादेत्ततः पश्चात्पयःपिबेत्। नक्रमूषिकमण्डूकचटकाण्डकृतं घृतं॥ पादाभ्यङ्गेन कुरुते बलं भूमिन्तु न स्पृशेत्। यावत् स्पृशति नो भूमिं तावद्गच्छेन्निरन्तरं॥ स्वयं गुप्तेक्षुरकयोः फलचूर्णं सशर्करं। धारोष्णेन नरः पीत्वाः पयसा न क्षयं व्रजेत्॥ उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते। शतावर्य्युच्चटामूलं पेयमेवं बलार्थिना॥ स्वयं गुप्ताफलैर्युक्तं माषसूपं पिबेन्नरः॥ गुप्ताफलं गोक्षुरकाच्च बीजं तथोच्चटां गोपयसा विपाच्य।खजाहतं शर्करया च युक्तं पीत्वा नरो हृष्यति सर्व्वरात्रं॥ माषान् विदारीमपि सोच्चटाञ्च क्षीरे गवां क्षौद्रघृतोपपन्नां। पीत्वा नरः शर्करया सुयुक्तां कुलिङ्गवद्धृष्यति सर्व्वरात्रम्॥ गृष्टीनां वृद्धवत्सानां माषपर्णभृतां गवां। यत्क्षीरं तत्प्रशंसन्ति बलकामेषु जन्तुषु॥ क्षीरमांसगणः सर्व्वः काकोल्यादिश्च पूजितः। वाजीकरणहेतोर्हि तस्मात्तत्तु प्रयोजयेत्॥ एते वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः। सेव्या विशुद्धोपचितदेहैः कालाद्यपेक्षया॥

## सप्तविंशोऽध्यायः॥

अथातः सर्व्वोपघातशमनीयं रसायनं व्याख्यास्यामः।

पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनं। प्रयुञ्जीत भिषक्प्राज्ञः स्निग्धशुद्धतनोः सदा॥ नाविशुद्धशरीरस्य युक्तो रासायनो विधिः। नभाति वाससि क्लिष्टे रङ्गयोग इवाहितः॥ शरीरस्योपघाता ये दोषजा मानसास्तथा। उपदिष्टाः प्रदेशेषु तेषां वक्ष्यामिवारणं॥ शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः त्रिशः समस्तमथ वा प्राक् पीतं स्थापयेद्वयः॥ तत्र विडङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत शीततोयंचानुपिबेदेवमहरहर्मासं तदेवं मधुयुक्तं भल्लातकक्वाथेन वा मधुद्राक्षाक्वाथयुक्तं वा

मध्वामलकरसाभ्यां वा गुडूचीक्वाथेन वा। एवमेते पञ्च प्रयोगा भवन्ति जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्। एते खल्ववर्शांसि चपयन्ति कर्मीनुपघ्नन्ति ग्रहणधारणशक्तिं जनयन्ति मासि मासिप्रयोगे वर्षशतमायुषोऽभिवृद्धिर्भवति॥ विडङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं खिन्नमवतार्य दृषदिपिष्टमायसे दृढे कुम्भे मधूदकोत्तरं प्रावृषि भस्मराशावन्तर्गृहे चतुरो मासान्निदध्यात्वर्षाभिगमे चोद्धृत्योद्धसंस्कृतशरीरः सहस्रसम्पाताभिहुतं कृत्वा प्रातः प्रातर्यथा बलमुपयुञ्जीत। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्पांशुशय्यायां शयीत तस्य मासादूर्द्धं सर्वाङ्गेभ्यः कृमयोनिःक्रामन्तितानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत्। द्वितीये पिपीलिकास्तृतीयेयूकास्तद्वैवापहरेत् चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते। अमानुषं चादित्यप्रकाशं वपुरधिगच्छति दूराच्छ्रवणानि दर्शनानि चास्य भववन्तिरजस्तमसी चापोह्य सत्वमधितिष्ठति श्रुतिनिगाद्यपूर्व्वोत्पादी गजबलोऽश्वयवः पुनर्युवाष्टौ वर्षशतान्यायुरवाप्नोति।तस्याणुतैलमभ्यङ्गार्थे।अजकर्णकषायमुत्सादनार्थे सौवीरं कूपोदकं स्नानार्थेचन्दनमुपलेपनार्थेभल्लातकविधानवदाहारःपरिहारश्चाकाश्मर्य्याणांनिष्कुलीकृतानामेषएवकल्पःपांशुशय्याभोजनवर्ज्जं। अत्रहि पयसो शृतेन भोक्तव्यं। आशिषश्च पूर्व्वेण समानाःशोणितपित्तनिमित्तेषु विकारेष्वेतेषामुपयोगः॥ यथोक्तमागारं प्रविश्य वलामूलाद्धं पलं पलंवा पयसालोड्य पिवेत्। जीर्णे पयःसर्पिरोदन इत्याहारः। एवं द्वादशरात्रमुपयुज्यद्वादश वर्षाणि वयस्तिष्ठति। एवं दिवसशत मुपयुज्य वर्षशतं वयस्तिष्ठति॥ एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः।विशेषतस्त्वतिवलामुदकेन नागबलाचूर्णं मधुना विदारीचूर्णं वा क्षीरेण शतावरीमप्येवंपूर्वेणान्यत्समानमाशिषश्च समाः॥ एतास्त्वौषधयो बलकामानां शोणित च्छर्दयतांविरिच्यमानानां चोपदिश्यन्ते॥ वाराहीमूलतुलाचूर्णं कृत्वा ततो मात्रांमधुयुक्तां पयसालोड्य पिवत् जीर्णे पयसर्पिरोदन इत्याहारः। प्रतिषेधो ऽत्र पूर्व्ववत् क्रियाप्रयोगमुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषुचाक्षयतां॥ एतेनैव चूर्णेन पयोऽवचूर्ण्य शृतशीतमभिमथ्याज्यमुत्पाद्यमधुयुतमुपयुञ्जीत सायम्प्रातरेककालं वा जीर्णे पयःसर्पिरोदन इत्याहारः। एवं माससमुपयुज्य वर्षशतमायुर्भवति। जीर्णे पयःसर्पिरोदन इत्याहारः॥ चक्षुःकामः प्राणकामो वा वीजकसाराग्निमन्थमूलं निःक्वाथ्य मासप्रस्थं साधयेत् तस्मिन् सिध्यति चित्रकमूलानामक्षमात्रं कल्कं दद्यादामलकरसचतुर्थभागं ततः खिन्नमवतार्य्य सहस्रसम्पाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिर्भ्यां संसृज्योपयुञ्जीत यथाबलं लवणं परिहरेद्भक्षयेत्जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्त मोदनमश्नीयात् पयसा वा मासत्रयमेवमाभ्यां प्रयोग्याभ्यां चक्षुः सौव-

र्ष्यं वज्रवत्यनल्पबलोबलवांस्त्रीषु चाचयोवर्षशतायुर्भवतीति ॥ भवति चात्र ॥ पयसा सह सिद्धानि नरः सनफलानि यः । भक्षयेत्पयसा सार्द्धं वयस्तस्य न शीर्य्यते ॥

# अष्टात्रिंशतितमो ऽध्यायः ॥

अथातो मेधायुष्कामीयं रसायनं चिकित्सितं व्याख्यास्यामः ।

मेधायुःकामः श्वेतवल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सह समालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात् सप्तरात्रादूर्द्धृत्य हृतदोषस्य यथा बलं पिण्डं प्रयच्छेदनुदिते सूर्य्ये उष्णोदकं चानुपिवेत् ॥ भल्लातकविधानवच्चागारप्रवेशो जीर्णौषधश्चापराह्ने हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरेणौदनमश्नीयादेवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतिनिगादी स्मृतिमानरोगी वर्षशतायुर्भवति ॥ कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोमूत्रेणालोड्य द्विपलिकं पिण्डं विगतलौहित्ये सवितरि पाययेत् पराह्ने चालवणेनामलकयूषेण सर्पिष्मन्दमोदनमश्नीयात् । एवं मासमुपयुज्य स्मृतिमानरोगी वर्षशतायुर्भवति ॥ एष एवोपयोगश्चित्रमूलानां रजन्याश्चित्रकमूले विशेषो द्विपलिकं पिण्डं परं प्रमाणं शेषं पूर्व्ववत् ॥ हृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादायसहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसालोड्य पिबेत्पयोऽनुपानं वा तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत तिलैर्वा सह भक्षयित्वा त्रीन्मासान् पयोऽनुपानं जीर्णे पयःसर्पिरोदन इत्याहारः । एवमुपयुञ्जानो ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशतमायुरवाप्नोति त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्षयेत् । त्रिरात्रादूर्द्ध्वं पयःसर्पिरिति चोपयुञ्जीत ॥ विल्वमात्रं पिण्डं वा पयसालोड्यपिबेदेवं दशरात्रमुपयुज्य मेधावी वर्षशतायुर्भवति ॥ हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तोब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत जीर्णौषधश्चापराह्ने यवागूमलवणां पिबेत् क्षीरसात्म्यो वा पयसा भुञ्जीत । एवं सप्तरात्रमुपयुज्यब्रह्मवर्चसी मेधावी भवति । द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति । नष्टञ्चास्य प्रादुर्भवति । तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति । एव मेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति मूर्त्तिमती चैनं वाग्देव्यनुप्रविशति सर्वाश्चैनं श्रुतयः उपतिष्ठन्ति । श्रुतधरः पञ्चवर्षशतायुर्भवति ॥ ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुडवं द्वे द्वे पले वचात्रिवृतयोर्द्वादशहरीतक्यामलकविभीतकानि श्लक्ष्णपिष्टान्यावाप्यैकध्यं साधयित्वा स्वनुगुप्तं निदध्यात् । ततः पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत जीर्णे पयःसर्पिरोदन इत्याहारः ॥ एतेनोर्ध्वमधस्तिर्य्यक्क्रमयो निःक्रामन्ति । अलक्ष्मीरपक्रामति ॥ पुष्करकर्णः स्थि-

रवचाः श्रुतनिगादी त्रिवर्षशतायुर्भवत्येतदेव कुष्ठविषमज्वरापस्मारोन्मादविषभूतग्रहे-
ष्वन्येषु च महाव्याधिषु च संशोधनमादिशन्ति ॥ कृतदोष एवागारं प्रविश्य हैमवत्या
वचायाः पिण्डमामलकमात्रमभिहुतं पयसालोड्य पिवेत् जीर्णे पयःसर्पिरोदन इत्याहार
एवञ्च द्वादशरात्रमुपयुञ्जीत ततोऽस्य श्रोत्रं विव्रियते द्विरभ्यासात्स्मृतिमान् भवति त्रि-
रभ्यासाच्छ्रुतमादत्ते चतुर्द्दादशरात्रमुपयुज्य सर्वंतरति किल्विषं तार्च्यदर्शन-
मुत्पद्यते शतायुश्च भवति । द्वे द्वे पले इतरस्या वचाया निःक्वाथ्य पिवेत्
पयसा समानं भोजनं समाः पूर्वेणाशिषश्च ॥ वचाशतपाकत्वां सर्पिर्द्रोणमुपयुज्य
पञ्चवर्षशतायुर्भवति गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति ॥ अ- थायुःकामीयं
वच्यामः ॥ मन्त्रौषधसमायुक्तं संवत्सरफलप्रदं । विल्वस्य चूर्णं पुष्ये तु हुतं वारान्
सहस्रशः ॥ श्रीसूक्तेन नरः काल्ये ससुवर्णं दिने दिने । सर्पिर्मधुयुतं लिह्यादल-
च्मीनाशनं परं ॥ त्वचं विल्वस्य मूलस्यमूलक्काथं दिनेदिने। प्राश्नीयात्पयसा सार्द्धं स्नात्वा-
हुत्वासमाहितः ॥ दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत् । हुत्वा विशानां क्वाथन्तु मधु-
लाजैश्च संयुतं ॥ अमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतं । सुवर्णपद्मवीजानि मधुलाजाः
प्रियङ्गवः ॥ गव्येन पयसा पीतमलच्मीं प्रतिषेधयेत् । नीलोत्पलदलक्काथो गव्येन पय-
सा स्मृतः ॥ सुवर्णतिलैः सार्धमलच्मीनाशनः स्मृतः । गव्यं पयः सुवर्णञ्च मधू-
च्छिष्टञ्च माच्चिकं ॥ पीतं शतसहस्राभिहुतं युक्तरथं स्मृतं । बचाघृतसुवर्णञ्च
विल्वचूर्णमिति त्रयं ॥ मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यपुष्टिसौभाग्यवर्द्धनं वासामूलतु-
लाक्काथे तैलमावाप्य साधितं ॥ हुत्वा सहस्रमश्नीयान्मेध्यमायुष्यमुच्यते । यावकां-
स्तावकान्भच्चेदभिभूययवांस्तथा ॥ पिप्पलीमधुसंयुक्तान् शिचाचरणवद्भवेत् । मध्वा-
मलकचूर्णानि सुवर्णमिति च त्रयं ॥ प्राश्यारिष्टगृहीतोपि मुच्यते प्राणसंशयात् । श-
तावरीघृतं सम्यगुपयुक्तं दिने दिने ॥ सचौद्रं ससुवर्णञ्च नरेन्द्रं स्थापयेद्वशे । गोचन्दना-
कोहनिकामधुकं माच्चिकं मधु ॥ सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता । पद्मनी-
लोत्पलक्काथे यष्टी मधुकसंयुते॥ सर्पिरासादितं गव्यं ससुवर्णं सदा पिवेत् । पयश्चानुपिवे-
त्सिद्धं तेषामेव तमुद्भवे ॥ अलच्मीघ्नं सदायुष्यं राज्याय सुभगाय च । यत्र नोदीरितो
मन्त्रोयोगेष्वेतेषु साधने ॥ शब्दिता तत्र सर्व्वत्र गायत्री त्रिपदी भवेत् । पाप्मानं नाश-
यन्त्येता दद्युश्चौषधयः श्रियं ॥ कुर्य्युर्नागबलं चापि मनुष्यममरोपमं । सतताध्ययनं
वादः परतन्त्रावलोकनं ॥ तद्विद्याचार्य्यसेवा च बुद्धिमेवाकरो गणः ॥ आयुष्यं भोजनं
जीर्णे वेगानाञ्चाविधारणं । ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनं ॥

—***—

## ॥ एकोनत्रिंशत्तमोऽध्यायः ॥

अथातः स्वभावविप्रतिषेधनीयं रसायनं व्याख्यास्यामः।

ब्रह्मादयोऽसृजन् पूर्वममृतं सोमसंज्ञितं। जरामृत्युविनाशाय विधानं तस्य वक्ष्यते॥ एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्य्यविशेषैश्चतुर्विंशतिधा भिद्यते॥ तद्यथा। अंशुमान्मुञ्जवांश्चैव चन्द्रमा रजतप्रभः। दूर्व्वासोमः कनीयांश्च श्वेताक्ष- कनकप्रभः॥ प्रतानवांस्तालवृन्तः करवीरोंऽशवानपि। स्वयम्प्रभो महासोमो यश्चापि गरुडाहृतः॥ गायत्र्य स्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा। अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः॥ गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते। एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः॥ सर्वेषामेव चैतेषामेको विधिरुपासने। सर्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते॥ अतोऽन्यतमं सोममुपयुयुक्षुः सर्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमागारंकारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभियुतमभिहुतं चान्तरागारे कृतमङ्गलः सोमकन्दं सुवर्णसूच्याविदार्य्य पयोगृह्णीयात्सौवर्णे पात्रेऽञ्जलिमात्रंततः सकृदेवोपयुञ्जीत नास्वादयं स्तत उपस्पृश्य शेषमप् स्ववसाद्य यमनियमाभ्यामात्मानंसंयोजय वाग्यतोऽभ्यन्तरतःसुहृद्भिरुपास्यमानोविहरेत्॥ रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः। आसीत तिष्ठेत्क्रामेच्च न कथञ्चन संविशेत्॥ सायं वा भुक्तवान् श्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत तृषितोवा शीतोदकमात्रां पिबेत् ततःप्रातरुत्थायोपस्पृ तशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तथैवासीत्। तस्य जीर्णे सोमे छर्दिरुपपद्यते ततः शोणिताक्तं कृमिव्यामिश्रं छर्दितवतः सायं शृतशीतं क्षीरंवितरेत्। ततस्तृतीयेऽहनिकृमिव्यामिश्रमतिसार्य्यते स तेनानिष्टप्रतिग्रहमुक्त प्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति ततः सायं स्नातस्य पूर्ववदेव क्षीरं वितरेत्। क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत ततश्चतुर्थेऽहनि तस्य श्वयथुरुत्पद्यते। ततः सर्वाङ्गेभ्यः कृमयो निष्क्रामन्ति तदहश्च शय्यायां पांशुभिरवकीर्य्यमाणः शयीत। ततः सायं पूर्व्ववदेव क्षीरं वितरेत्। एवं पञ्चमषष्ठयोर्दिवसयोर्वर्त्तेत केवलमु भयकालमस्मै क्षीरं वितरेत्ततः सप्तमेऽहनिनिर्मांसस्त्वगस्थिभूतः केवलं सोमपरिग्रहा देवीच्छ्वसिति। तदहश्च क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयःपाययेत्। ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दनपदिग्धगात्रं पयः पायित्वा पांशुशय्यां समुत्सृज्य क्षौमास्तृतायां शाययेत्ततो मासं माप्याय्यते त्वक्चावदलति। दन्तनखरोमाणि चास्य पतन्ति। तस्य नवमदिवसात्प्रभृत्यणु तैलाभ्याङ्गः सोमवल्ककषायपरिषे-

कः । ततो दशमेऽहन्येतदेव वितरेत् ततोऽस्य त्वक्स्थिरतामुपैति । एवमेकादशद्वादशयोर्वर्त्तेत । तत्र त्रयोदशात् प्रभृति सोमवल्ककषायपरिषेकः । एवमाषोडशाद्वर्त्तेत ततः सप्तदशाष्टदशयोर्दिवसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः । तदा प्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमपसेवेत यावत् पञ्चविंशतिरिति । ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः स्थिराः स्निग्धा लक्षणसम्पन्नाः केशाश्च जायन्ते त्वक्च नीलोत्पलातसीपुष्पवैदूर्य्यप्रकाशा । ऊर्द्ध्वं च मासात्केशान्वापयेद्वापयित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा स्नापयेत् ॥ ततोऽस्यानन्तरं सप्तरात्रात्केशा जायन्ते भ्रमराञ्जननिभाः कुञ्चिताः स्निग्धास्ततस्त्रिरात्रात्प्रथमपरिसरान्निःक्रम्य मुहूर्तं स्थित्वा नरेवान्तःप्रविशेत् । ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य्यं । यवपिष्टमुद्वर्त्तनार्थं । सुखोष्णञ्च पयः परिषेकार्थं । अजकर्णकषायमुत्सादनार्थं । सोशीरं कूपोदकं स्नानार्थं चन्दनमनुलेपार्थं । आमलकरसविमिश्राश्चास्य यूषसूपविकल्पाः । क्षीरमधुकसिद्धञ्च कृष्णतिलमवचारणार्थं । एवं दशरात्रं ततोऽन्यद्दशरात्रं द्वितीये परिसरे वर्त्तेत । ततस्तृतीये परिसरे स्थिरो कुर्व्वन्नात्मानमप्यष्टशरात्रमासीत । किञ्चिदातपपवनान् वासेवेत पुनश्चान्तः प्रविशेत् । नचात्मानमादर्शेषु वा निरीक्षेत रूपशालित्वात् ततोऽन्यद्दशरात्रं क्रोधादीन् परिहरेदेवं सर्व्वेषामुपयोगः । विशेषतस्तु वल्लीप्रतानक्षुपादयः सोमा भक्षयितव्याः । तेषान्तु प्रमाणमर्द्धचतुर्थमुष्टयः॥ अंशवन्तं सौवर्णे पात्रेऽभिषुणुयात् । चन्द्रमसं राजते चोपयुज्याष्टगुणमैश्वर्य्यमवाप्येशानन्देवमनुप्रविशति । शेषांस्तु ताम्रमयेमृण्मये वा रोहिते वा चर्म्मणि वितते शूद्रवर्ज्जं त्रिभिर्वर्णैः सोमा उपयोक्तव्याः । ततश्चतुर्थे मासे पौर्णमास्यां शुचौ देशे ब्राह्मणानर्चयित्वा कृतमङ्गलो निःक्रम्य यथोक्तं व्रजेदिति॥ ओषधीनां पतिं सोममुपयुज्य विचक्षणः । दशवर्षसहस्राणि नवान्धारयते तनु ॥ नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च । तस्यालमायुःक्षपणे समर्थाश्च भवन्ति हि ॥ भद्राणां षष्टिवर्षाणां प्रसुतानामनेकधा । कुञ्जराणां सहस्रस्य बलं समधिगच्छति ॥ क्षीरोदं शक्रसदनमुत्तरांश्चकुरूनपि । यत्रेच्छति स गन्तुं वा तत्राप्रतिहतागतिः ॥ कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः । प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥ साङ्गोपाङ्गांश्च निखिलान्वेदान्विन्दति तत्त्वतः। चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत् ॥ सर्व्वेषामेव सोमानां पत्राणि दशपञ्च च । तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥ एकैकं जायते पत्रं सोमस्याहरहस्तदा । शुक्लस्य पौर्णमास्यात्तु भवेत्पञ्चदशच्छदः । शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः । कृष्णपक्षक्षये चापि लता भवति केवला ॥ अंशुमानाज्यगन्धस्तु कन्दवानजतप्रभः । कदल्या-

कारकन्दस्तुमुञ्जवांश्चांशुमच्छदः ॥ चन्द्रमाः कनकाभासो जले चरति सर्व्वदा । गरुडाह्न-तनामा च श्वेताक्षश्चापि पाण्डुरौ ॥ सर्पनिर्म्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ । तथान्यै-र्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ॥ सर्वे एव तु विज्ञेयाः सोमाः पञ्चदशच्छदा । क्षीर-कन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः ॥ हिमवत्यर्बुदे सह्ये महेन्द्रमलये तथा । श्रीपर्वते देवगिरौ गिरौ देवसहे तथा ॥ पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा । उत्तरेण वि-तस्तायाः प्रवृद्धा ये महीधराः ॥ पञ्च तेषामधो मध्ये सिन्धुनामा महानदः । हठवत्प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥ तस्योद्देशेषु वाप्यस्ति मुञ्जवानंशुमानपि । काश्मीरेषु सरो-दिव्यंनाम्ना क्षुद्रकमानसं ॥ गायत्रस्त्रैष्टुभः पांक्तो जागतः शाङ्करस्तथा । अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः ॥ न तान्पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः । भेषजद्वे-षिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥

# त्रिंशत्तमोऽध्यायः ॥

अथातो निवृत्तसन्तापीयं रसायनं व्याख्यास्यामः ।

यथा निवृत्तसन्तापा मोदन्ते दिवि देवताः । तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः ॥ अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन् । तद्यथा । अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद्भेषजापमानी चेति । सप्तभिरेव कारणैर्न सम्पद्यते । अज्ञानाद-नारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधलाभाच्चेति ॥ अथौषधीर्व्या-ख्यास्यामः । श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रातिच्छत्रा करेणुर-जा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्च्चला श्रावणी महाश्रावणी गोलोमी चाजलोमी म-हावेगवती चेत्यष्टादश सोमसमवीर्य्या महौषधयो व्याख्याताः ॥ तासां सोमवत्क्रियाशेषः रतुतयः शेस्त्रेऽभिहितास्तासामागारेऽभिहुतानां याः क्षीरवत्यस्तासां क्षीरकुडवं सकृदे-वोपयुञ्जीत ॥ यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाण-मुपयोगे । श्वेतकापोती समूलपत्रा भक्षयितव्या गोनस्यजगरीकृष्णकापोतीनां सनखमु-ष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभुञ्जीत । चक्र-कायाः पयःसकृदेव । ब्रह्मसुवर्चला सप्तरात्रमुपयोक्तव्या ॥ भक्ष्यकल्पेन शेषाणां पञ्चपला-नि क्षीराढकक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहा-रविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति ॥ भवन्ति चात्र ॥ युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं । कुर्य्युरेताः क्रमेणैव हिसाहस्रायुषं नरं ॥ अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः । चरत्यमोघसङ्कल्पो नभस्यम्बुददुर्ग-मे ॥ व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदाः । गतिः सौषधिसिद्धस्य सोमसिद्धगतिः

परा ॥ अथ वक्ष्यामि विज्ञानमौषधीनां पृथक् पृथक् । मण्डलैः कपिलैश्चित्रैः सर्पाभाः पञ्चपर्णिनी ॥ पञ्चारत्नि प्रमाणा वा विज्ञेयाजगरी बुधैः । निष्पत्रा कनकाभासा मूलेद्व्यङ्गुलसम्मिता ॥ सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते । द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां ॥ द्वारत्निमात्रां जानीयात् गोनसीं गोनसाकृतिं । सक्षीरां रोमशां मृद्वीं रसेनाक्षुरसोपमां ॥ एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत् । कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा ॥ एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा । छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे ॥ जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते । कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमः ॥ कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी । करेणुः सुबहुक्षीरा कन्देन गजरूपिणी ॥ हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी । अजास्तनाभकन्दात् सक्षीरा क्षुपरूपिणी ॥ अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा । श्वेतां विचित्रकुसुमां काकादन्या समां क्षुपां ॥ चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीं । मूलिनी पञ्चभिः पत्रैः सुरक्तांशुकोमलैः ॥ आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी । कनकाभा जलान्तेषु सर्व्वतः परिसर्पति ॥ सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला । अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः ॥ पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः । श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा । गोलोमी चाजलोमी च रोमशे कन्दसम्भवे ॥ हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः । अथवा शङ्खपुष्पी च समानां सर्व्वरूपतः ॥ वेगेन महताविष्टा सर्पनिर्मोकसन्निभा । एषा वेगवती नाम जायते ह्यम्बुदक्षये ॥ सप्तादौ सर्व्वरूपिण्यो याश्चौषध्यः प्रकीर्त्तिताः । तासामुद्धरणं कार्य्यं मन्त्रेणानेन सर्व्वदा ॥ महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि । तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै ॥ मन्त्रेणानेन मतिमान् सर्व्वानप्यभिमन्त्रयेत् । अश्रद्दधानैरलसैः कृतघ्नैः पापकर्मभिः ॥ नैवासादयितुं शक्याः सोमाः सोमसमास्तथा । पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः ॥ निहितं सोमवीर्य्यास्तु सोमे चाप्यौषधीपतौ । देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे ॥ दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला । आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये ॥ दृश्यते जगरी नित्यं गोनसी चांबुदागमे । काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसं ॥ करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा । गोलोमी चाजलोमी च महती श्रावणी तथा ॥ वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते । कौशिकीं सरितं तीर्त्त्वा सञ्चयन्त्यास्तु पूर्वतः ॥ चितिप्रदेशो वल्मीकैराचितो योजनत्रयं । विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु ॥ मलये नलसेतौ च वेगवत्यौषधी ध्रुवा । कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः ॥ सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितं । सर्वा विज्ञेयास्त्वौषध्यः सोमेचाप्यर्वुदे गिरौ ॥ सम्शृङ्गैर्देवचरितैरब्दानीकभेदिभिः । व्याप्तस्तीर्थैश्च विख्यातैः सि-

ऋषिसुरसेवितैः ॥ गुहाभिर्भीमरूपाभिः सिंहोन्नादितकुक्षिभिः। गजालोडिततोयाभिरापगाभिः समन्वतः। विविधैर्धातुभिश्चित्रैः सर्व्वत्रैवोपशोभितः। नदीषु शैलेषु सरस्सु चापि पुण्येष्वरण्येषु तथाश्रमेषु। सर्वत्र सर्वाः परिमार्गितव्याः सर्वत्र भूमिर्हि वसूनि धत्ते॥

# एकत्रिंशत्तमोऽध्यायः ॥

अथातः स्नेहोपयौगिकं चिकित्सितं व्याख्यास्यामः।

स्नेहसारोऽयं पुरुषः प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति। स्नेहोहि पानानुवासनमस्तिष्कशिरोवस्त्युत्तरवस्तिनस्यकर्णपूरणगात्राभ्यङ्गभोजनेषूपयोज्यः ॥ तत्र द्वियोनिश्चतुर्विकल्पोऽभिहितः स्नेहः गुणाश्च ॥ तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानम्। स्थावरेभ्यस्तिलतैलं प्रधानमिति ॥ अत ऊर्द्धं यथाप्रयोजनं यथाविधानं च स्थावरस्नेहानुपदेक्ष्यामः॥ तत्र तिल्वकैरण्डकोशाम्रदन्तीद्रवन्तीसप्तलाङ्खिनीपलाशविषाणिकागवाक्षीकम्पिल्लकशम्पाकनीलिनीस्नेहा विरेचयन्ति॥ जीमूतककुटजकृतवेधनेक्ष्वाकुधामार्गवमदनस्नेहा वमयन्ति॥ विडङ्गखरमञ्जरीमधुशिग्रुसूर्य्यवल्लीपीलुसिद्धार्थकज्योतिष्मतिस्नेहाः शिरो विरेचयन्ति॥ करञ्जपूतिककृतमालमातुलुङ्गेङ्गुदीकिराततिक्तकस्नेहा दुष्टव्रणेषूपयुज्यन्ते। तुवरककपित्थकम्पिल्लकभल्लातकपटोलस्नेहा महाव्याधिषु। त्रपुसैर्वारुकककर्कारुकतुम्बीकुष्माण्डस्नेहा मूत्रसङ्गेषु। कपोतवङ्कावल्गुजहरीतकीस्नेहाः शर्कराश्मरीषु। कुसुम्भसर्षपातसी पिचुमर्दातिमुक्तकभाण्डीकटुतुम्बीकटभीस्नेहाः प्रदेहेषु। तालनारिकेलपनसमोचपियालविल्वमधूकश्लेष्मातकाम्रातकफलस्नेहा। पित्तसंसृष्टे वायौ। विभीतकभल्लातकपिण्डितकस्नेहाः सवर्णीकरणे श्रवणकङ्कुकटुरटुकस्नेहाः पाण्डुकरणे॥ शिंशपागुरुसारस्नेहाः दद्रुकुष्ठकिटिमेषु॥ सर्व एव स्नेहा वातमुपघ्नन्ति। तैलगुणाश्च समासेन व्याख्याताः ॥अत ऊर्द्धं कषायस्नेहपाकक्रममुपदेक्ष्यामः॥ तत्र केचिदाहुस्त्वक्पत्रमूलादीनां भागं स्वचतुर्गुणजलमावाप्य चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः॥ स्नेहप्रस्थेषु षट्सुचतुर्गुणं द्रवमावाप्य चतुरश्चाक्षसमान् भेषजपिण्डानित्येष स्नेहपाककल्पः॥ एतत् न सम्यक् कस्मादागमासिद्धत्वात् ॥ पलकुडवादीनामतो मानन्तु व्याख्यास्यामः॥ तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषकः। ते षोडश सुवर्णं। अथ मध्यमनिष्पावा वा एकोनविंशतिर्द्धरणं। तान्यर्द्धतृतीयानि कर्षः। ततश्चोर्द्धं चतुर्गुणमभिवर्द्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यविनिष्पद्यन्ते तुला पलशतं तानि विंशतिर्भारः शुष्काणामिदं मानमार्द्रद्रवाणाञ्च द्विगुणमिति ॥ तत्रान्यतमपरिमाणसंमितानां यथायोगं त्वक्पत्रमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा भेद्यान्यणशोभेदयित्वावकल्प्याष्टगुणेन षोडशगुणेन वाम्भसाभिषिच्य स्थाल्यां चतु-

# ॥ द्वात्रिंशत्तमोऽध्यायः ॥

अथातो स्वेदावचारणीयं चिकित्सितं व्याख्यास्यामः ।

चतुर्व्विधः स्वेदस्तद्यथा । तापस्वेद उष्मस्वेद उपनाहस्वेदो द्रवस्वेद इति । अत्र सर्वस्वेदविकल्पावरोधः ॥ तत्र तापस्वेदः । पाणिकांस्यकन्दकपालवालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैरिति ॥ उष्मस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरा सिञ्चेदम्लद्रव्यैर्वातैरार्द्रैर्लक्तकपरिवेष्टितमङ्गप्रदेशं स्वेदयेत् ॥ मांसरसपयोदधिधान्याम्लवातहरपत्रभङ्गक्वाथपूर्णां वा कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात् ॥ पार्श्वच्छिद्रेण वा कुम्भेनाधोमुखेन तस्य मुखमभिसन्धाय तस्मिन्छिद्रे हस्तिशुण्डाकारां नाडीं प्रणिधाय तं स्वेदयेत् ॥ सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतं । हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणं ॥ सुखा सर्वाङ्गगा ह्येषा नच क्लिश्नाति मानवं । व्यामार्द्धऽमात्रा त्रिविक्रा हस्तिहस्तसमाकृतिः ॥ स्वेदनार्थे हिता नाड़ी कैलिञ्जी हस्तिशुण्डिका । पुरुषायाममात्रान्च भूमिमुत्कीर्य्य खादिरैः ॥ काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः । पत्रभङ्गैरवच्छाद्यः शयानं स्वेदयेत्ततः ॥ पूर्ववत्स्वेदयेद्दग्ध्वा भस्मापोह्यापि वा शिलां ॥ पूर्व्ववत् कुटीं वा चतुर्द्वारां कृत्वा तस्यामुपविष्टस्यान्तश्चतुर्द्वारेऽङ्गारानुपसन्धाय तं स्वेदयेत् ॥ धान्यानि वा सम्यगुपस्वेद्यास्तीर्य्य किलिञ्जेऽन्यस्मिन्वा तत्प्रतिरूपके शयानं प्रावृत्य स्वेदयेदेवं पांशुगोशकृत्तुषवुसपलालोष्मभिः स्वेदयेत् ॥ उपनाहस्वेदस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढैः सुस्निग्धैः सुखोष्णैः प्रदिह्यस्वेदयेत् । एवं काकोल्यादिभिः सुरसादिभिस्तिलातसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः शाल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत् ॥ द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वा विगाह्य स्वेदयेत् । एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत सुखोष्णैः कषायैः परिषिञ्चेदिति ॥ तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ । उपनाहस्वेदो वातघ्नः ॥ अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति ॥ कफमेदोऽन्विते वायौ निवातातपगुरुप्रावरणनियुद्धाध्वव्यायामभारहरणामर्षैः स्वेदमुत्पादयेदिति ॥ भवन्ति चात्र ॥ चतुर्विधो योऽभिहितो द्विधा स्वेदः प्रयुज्यते । सर्व्वस्मिन्नेव देहे तु देहस्यावयवे तथा ॥ येषां नस्यं विधातव्यं वस्तिश्चैवहि देहिनां । शोधनीयाश्च ये केचित्पूर्वं स्वेद्यास्तु ते मताः ॥ पश्चात् स्वेद्या हृते शल्ये मूढगर्भानुपद्रवाः । सम्यक्प्रजाता काले या पश्चात्स्वेद्या विजानता ॥ स्वेद्यं पूर्वं च पश्चाच्च भगन्दर्य्यर्शसस्तथा । अश्मर्य्याचातुरो जन्तुः शेषान् शास्त्रे प्रचक्ष्महे ॥ नानभ्यक्तो नापि चास्निग्धदेहे स्वेदो योज्यः स्वेदविद्भिः कथञ्चित् । दृष्टं लोके काष्ठमस्निग्धमाशु गच्छेद्भङ्गं स्वेदयोगैर्ध्रुवं हीतम्॥

अथातो दृष्टिगतरोगप्रतिषेधं व्याख्यास्यामः ।

त्रयः साध्यास्त्रयोऽसाध्या याप्याः षट् च भवन्ति हि । तत्र कास्य प्रतीकारः कीर्ति-
तो धूमदर्शिनः ॥ दृष्टौ पित्तविदग्धायां विदग्धायां कफेन च । पित्तश्लेष्महरं कुर्य्याद्वि-
धिं शस्त्रक्षताहते ॥ नस्यसेकाञ्जनालेपपुटपाकैः सतर्पणैः । आद्ये तु त्रैफलं पेयं सर्पि-
स्त्रैवृत्तमुत्तरे ॥ तैल्वकं चोभयोः पथ्यं केवलं जीर्णमेव वा । गैरिकं सैन्धवं कृष्णां गो-
दन्तस्य मसीन्तथा ॥ गोमांसं मरिचं बीजं शिरीषस्य मनःशिला । वृन्तं कपित्था-
न्मधुना स्वयङ्गुप्ताफलानि च ॥ चत्वार एते योगाः स्युरुभयोरञ्जने हिताः । कुब्जका-
शोकशालाम्रप्रियङ्गुनलिनोत्पलैः ॥ पुष्पैर्हरेणुकृष्णाह्वापथ्यामलकसंयुतैः । सर्पिर्मधु-
युतैश्चूर्णैर्वेणुनाड्यामवस्थितैः अञ्जयेद्द्वावपि भिषक्पित्तश्लेष्मविभावितौ । आम्रज-
म्बुभवं पुष्पं तद्रसेन हरेणुकां पिष्ट्वा क्षौद्राज्यसंयुक्तां प्रयोज्यमथवाञ्जनं । नलिनो-
त्पलकिञ्जल्कगैरिकैर्गोशकृद्रसैः ॥ गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम् । र-
साञ्जनरसक्षौद्रतालीशस्वर्णगैरिकं ॥ गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये । शीतं सौ-
वीरकं वापि पिष्ट्वाथ रसभावितं ॥ कूर्म्मपित्तेन मतिमान् भावयेद्रोहितेन वा । चूर्णा-
ञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये ॥ काश्मरीपुष्पमधुकदार्वीरोध्ररसाञ्जनैः ।
सक्षौद्रमञ्जनन्तद्वद्धितं नेत्रामये सदा ॥ स्रोतोजं सैन्धवं रेणुकाञ्चापि पेषयेत् । अजमू-
त्रेण ता वर्त्त्यः क्षणदान्ध्याञ्जने हिताः ॥ कालानुसारिवां कृष्णां नागरं मधुकं तथा ।
तालीशपत्रं क्षणदे गाङ्गेयञ्च शकृद्रसे ॥ कृतास्ता वर्त्तयः पिष्टाश्छायाशुष्काः सुखावहा
मनःशिलाभयाव्योषबलाकालानुसारिवाः ॥ सफेना वर्त्तयः पिष्टाश्छागक्षीरसमन्विताः ।
गोमूत्रपित्तमदिराशकृत्धात्रीरसे पचेत् ॥ क्षुद्राञ्जनं रसे चान्यद्यकृतस्त्रैफलेऽपि वा
गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलं॥सैन्धवोपहितं युञ्ज्याद्धितांत्रिहितं वेणुगह्वलि
मेदोयकृद्दृतञ्चाजं पर्व्वरोः सैन्धवं मधु । रसमामलकञ्चापि पक्कं सम्यङ् निधापयेत् ॥
कोशे खदिरनिर्माणे तद्वत्क्षुद्राञ्जनं हितम् । हरेणुमगधाजास्थिमज्जैलायकृदन्वित-
म् । शकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये । विपाच्य गोधायकृतदर्द्धपाटितं सुपूरितं
मागधिकाभिरग्निना । निषेवितं ततसकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु ॥
तथा यकृच्छागभवं हुताशने विपाच्य सम्यग्मगधासमन्वितम् । प्रयोजितं पूर्ववदाश्व-
संशयं जयेत्क्षपान्ध्यं सकृदञ्जनान्नृणां ॥ प्लीहा यकृच्चाप्युपभक्षिते उभे प्रकल्प्य शूल्ये
घृततैलसंयुतम् । ते सार्षपस्नेह समायुतेऽञ्जनं नक्तान्ध्यमाश्वेव हतः प्रयोजिते ॥ नदी-
जशिम्बीकटुकान्यथाञ्जनम्मनःशिला द्वे च निशे यकृद्रसे । सचन्दनेयं गुटिकाथवाञ्जनं
प्रशस्यते वै दिवसेष्वपश्यतां ॥ भवन्ति याप्याः खलु ये षडामया हरेदसृक्तेषु सिरा-
विमोक्षणैः । विरेचयेच्चापि पुराणसर्पिषा विरेचनाङ्गोपहितेन सर्वदा ॥ पयो विमिश्रमप-

वलोद्भवे हितं वदन्ति पञ्चाङ्गुलतैलमेव तु । भवेद्घृतं त्रैफलमेव शोधनं विशेषतः शोणितपित्तरोगयोः ॥ त्रिवृद्विरेकः कफजे प्रशस्यते त्रिदोषजे तैलमुशन्ति तत्कृतम् । पुराणसर्पिस्तिमिरेषु सर्वतो हितं भवेदायसभाजनं स्थितम् ॥ हितं च विद्यात्त्रिफला-घृतं सदा कृतञ्च यन्मेषविभाग नामभिः । सदा वलिह्यात्त्रिफलां सुचूर्णितां घृतप्रगाढां तिमिरेऽथ पित्तजे ॥ समीरजे तैलयुताङ्कफात्मके मधुप्रगाढां विदधीत युक्तितः । गवां शकृत् क्वाथविपक्वमुत्तमं हितन्तु तैलं तिमिरेषु लावनम् ॥ हितं घृतं केवलमेव पैत्तिके ह्यजाविकं यन्मधुरैर्विपाचितम् । तैलं स्थिरादौ मधुरे च यद्गुणे तथाणुतैलं पवनासृगुत्थयोः ॥ महाश्वगन्धातिबलावरीशृतं हितञ्च नस्ये त्रिवृतं यदीरितम् । जलोद्भवानूपजमांससंस्कृताद्घृतं विधेयं पयसोयदुत्थितम् ॥ ससैन्धवः क्रव्यभुगेणमांसयोर्हितः ससर्पिः समधुः पुटाह्वयः । वसाथ गृध्रोरगताम्रचूडजासदा प्रशस्ता मधुकान्विताञ्जने ॥ प्रत्यञ्जनं स्रोतसि यत्समुत्थितं क्रमाद्रसक्षीरघृतेषु भावितम् । स्थितं दश त्र्यहमेतदञ्जनं कृष्णोरगास्ये कुशसम्प्रवेष्टिते ॥ तन्मालतीक्षारकसैन्धवायुतं सदाञ्जनं स्यात्तिमिरेऽथ रागिणि । सुभावितं वा पयसा दिनत्रयं काचापहं शास्त्रविदः प्रचक्षते ॥ हविर्हितं क्षीरभवन्तु पैत्तिके वदन्ति नस्य मधुरौषधैः कृतम् । तत्तर्पणे चैव हितं प्रयोजितं सजाङ्गलस्तेषु च यः पुटाह्वयः ॥ रसाञ्जनक्षौद्रसितामनःशिलाक्षुद्राञ्जनं तन्मधुकेन संयुतम् । समाञ्जनं वा कनकाकरोद्भवं सुचूर्णितं श्रेष्ठमुशन्ति तद्विदः ॥ भिल्लोटगन्धोदकसेकसेवितं प्रत्यञ्जनञ्चात्र हितं तु तुत्थकं । समेषशृङ्गाञ्जनभागसम्मितं जलोद्भवं काचमल व्यपोहति ॥ पलाशरोहीतमधूकजा रसाः क्षौद्रेण युक्ता मदिराग्रमिश्रिताः । उशीरलोध्रत्रिफलाप्रियङ्गुभिः पचेत्तु नस्यङ्कफरोगशान्तये ॥ विडङ्गपाठाकिणिहीङ्गुदीत्वचः प्रयोजयेद्धूममुशीरसंयुतम् । वनस्पतिक्वाथविपाचितं घृतं हितं हरिद्रानलदेऽवतर्पणे ॥ समागधो माक्षिकसैन्धवाढ्यः सजाङ्गलः स्यात्पुटपाकएव च । मनःशिलाव्यूषणशङ्खमाक्षिकैः ससिन्धुकासीसरसाञ्जनैः क्रियाः ॥ हितेच कासीसरसाञ्जने तथा वदन्ति पथ्ये गुडनागरैर्युते । तदञ्जनं वा बहुशो निषेचितं समूत्रवर्गे त्रिफलोदके शृते ॥ निशाचरास्थिस्थितमेतदञ्जनं क्षिपेच्च मासं सलिले स्थिरे पुनः । मेषस्य पुष्पैर्मधुकेन संयुतं तदञ्जनं सर्व्वकृते प्रयोजयेत् ॥ क्रियाश्च सर्व्वाः क्षतजोद्भवे हिताः क्रमः परिम्लायिनि चापि पित्तहृत् । क्रमो हितः स्यन्दहरः प्रयोजितः समीक्ष्य दोषेषु यथास्वमेव च ॥ दोषोदयेनैव च विप्लुतिङ्गते द्रव्याणि नस्यादिषु योजयेद्बुधः । पुनश्च कल्पेऽञ्जनविस्तरः शुभः प्रवक्ष्यतेऽन्यस्तमपोह्य योजयेत् ॥ घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकं यवानपि । निषेवमाणस्य नरस्य यत्नतो भयं सुघोरात्तिमिरान्न विद्यते ॥ शतावरीपायसएवकेवलस्तथाकृतो वामलकेषु पायसः । प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिरं व्यपोहति ॥ जीवन्तिशाकं सु

निषसकश्च मतण्डुलीयं वरवास्तुकञ्च । चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुन-जाङ्गलञ्च ॥ पटोलकर्कोटककारवेल्लवार्त्ताकुतर्क्कारिकरीरजानि । शाकानि शिग्वार्त्तगलानि चैव हितानि दृष्टेर्घृतसाधितानि ॥ विवर्ज्जयेत्सिरामोक्षं तिमिरे रागमागते । यन्त्रणोत्पीडितो दोषो निहन्यादाशु दर्शनं ॥ अरागि तिमिरं साध्यमाद्यं पटलसांश्रितम् । कृच्छ्रं द्वितीये रागि स्यात्तृतीये याप्यमुच्यते ॥ रागप्राप्तेष्वपि हितास्तिमिरेषु तथा क्रियाः । यापनार्थं यथोद्दिष्टाः सेव्याश्चापि जलौकसः ॥ श्लैष्मिके लिङ्गनाशे तु कर्म वक्ष्यामि सिद्धये । नचेदर्द्धेन्दुघर्माम्बुविन्दुमुक्ताकृतिः स्थिरः ॥ विषमो वा तनुर्मध्ये राजिमान्वा बहुप्रभः । दृष्टिस्थो लक्ष्यते दोषः सरुजो वा सुलोहितः ॥ स्निग्धस्विन्नस्य तस्याथ काले-नात्युष्णशीतले । यन्त्रितस्योपविष्टस्य स्वान्नासाम्पश्यतः समम् ॥ मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वाद्यपाङ्गतः । उन्मील्य नयने सम्यक् सिराजालविवर्ज्जिते ॥ नाधो नोर्द्ध्व पार्श्वाभ्यां छिद्रे दैवकृते ततः । शलाकया प्रयत्नेन विश्वस्तं यववक्त्रया ॥ मध्यप्रदेशिन्यङ्गुष्ठस्थिरहस्तगृहीतया । दक्षिणेन भिषक्सव्यं विध्येत्सव्येन चेतरत् ॥ वारिविन्द्वागमः सम्यग्भवेच्छब्दस्तथा व्यधे । संसिच्य विद्धमात्रन्तु योषित्स्तन्येन कोविदः ॥ स्थिरे दोषे चले वापि स्वेदयेदक्षि वाह्यतः । सम्यक् शलाकां संस्थाप्य मङ्गैरनिलनाशनैः ॥ शलाकाग्रेण तु ततो निर्लिखेद्दृष्टिमण्डलम् । विध्यतो योऽन्यपार्श्वेऽक्ष्णस्तत् रुद्ध्वा नासिकापुटम् ॥ उच्छिङ्घनेन हर्त्तव्यो दृष्टिमण्डलजः कफः । निरभ्रइव घर्म्मांशुर्य्यदा दृष्टिः प्रकाशते ॥ तदासौ लिखिता सम्यग्ज्ञेया याचापिनिर्व्यथा।ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः॥ घृतेनाभ्यज्य नयनं वस्त्रपट्टेन वेष्टयेत् । ततो गृहे निरावाधे शयीतोत्तानएव च ॥ उद्गारकासक्षवथुष्ठीवनोज्जृम्भणानि च । तत्कालंनाचरेदूर्द्ध्वं विधिस्स्नेहपीतवत् ॥ त्र्यहात्त्र्यहाच्च धावेत कषायैरनिलापहैः । वायोर्भयात्त्र्यहादूर्द्ध्वं स्वेदयेदक्षि पूर्व्ववत् ॥ दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् । पश्चात्कर्म्म च सेवेत लघ्वन्नञ्चापि मात्रया ॥ सिराव्यधविधौ पूर्व्वं नरा ये च विवर्ज्जिताः । न तेषां नीलिकां विध्येदन्यत्राभिहिताद्भिषक् ॥ पूय्यते शोणितेनाक्षि सिरावेधाद्विसर्पता।तत्र स्रोतस्त्न्ययष्ट्याह्व-पक्वं सेके हितं घृतम् ॥ अपाङ्गासन्नविद्धे तु शोफशूलाश्रुरक्तताः तत्रोपनाहं भ्रूमध्ये कुर्य्याच्चोष्णाज्यसेचनम् ॥ व्यधेनासन्नकृष्णेन भागः कृष्णस्य पीड्यते । तत्राधः शोधनं सेकः सर्पिषा रक्तमोक्षणं ॥ अथाप्युपरि विद्धे तु कष्टा रुक्सम्प्रवर्त्तते । तत्र कोष्णेन हविषा परिषेकः प्रशस्यते ॥ शूलाश्रुरागास्त्वत्यर्थमधोविद्धे भवन्ति हि । विदधीत भिषग्धीमान् तत्र पूर्व्वं चिकित्सितम् ॥ रागाश्रुवेदनास्तम्भहर्षाश्चातिविघट्टिते । स्नेहस्वेदौ हितौ तत्र हितं वाप्यनुवासनं ॥ दोषस्त्वथोपकृष्टोऽपि तरुणः पुनरूर्द्ध्वगः । कुर्य्याच्छुक्लारुणं तत्तु तीव्ररुग्नष्टदर्शनं ॥ मधुरैस्तत्रसिद्धेन घृतेनाक्ष्णोः प्रसेचनं। शिरोवस्तिश्च तेनैव दद्यान्मां-

सैव भोजनं ॥ दोषस्तु सञ्जातवलो धनः संपूर्णमण्डलः । प्राप्य नश्येच्छलाकाग्रं तन्वभ्रमिव मारुतम् ॥ मूर्द्धाभिघातव्यायामव्यवायवमिमूर्च्छनैः । दोषः प्रत्येति कोपाच्च विद्धोऽतितरुणश्च यः ॥ शलाका कर्कशा शूलं खरा दोषपरिप्लुतिम् । व्रणं विशालं स्थूलाग्रा तीक्ष्णा हिंसादनेकधा ॥ जलास्रावन्तु विषमा क्रियासङ्गमथास्थिरा । करोति वर्जिता दोषैस्तस्मादेभिर्व्विता भवेत् ॥ अष्टाङ्गुलायता मध्ये सूत्रेण परिवेष्टिता । अङ्गुष्ठपर्वसमिता वक्त्रयोर्मुकुलाकृतिः ॥ ताम्रायसी शातकौम्भीशलाका स्यादनिन्दिता । रागः शोफोऽर्वुदश्चोषोबुद्बुदं शूकराचिता ॥ अधिमन्यादयाश्चान्ये रोगाः स्युर्व्यधयोषजाः । अहिताचारतोवापि यथास्वं तानुपाचरेत् ॥ रुजायामक्षिरागे वा योगान्भूयो निबोध मे । गैरिकं सारिवा दूर्व्वा यवपिष्टं घृतं पयः ॥ सुखालेपः प्रयोज्योऽयं वेदनारागशान्तये । घृतभृष्टैस्तिलैर्वापि सिद्धार्थकसमायुतैः ॥ मातुलुङ्गरसोपेतैः सुखालेपस्तदर्थकृत् । पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ॥ अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते दारुपद्मकशुण्ठीभिरेवमेव कृतोऽपि वा ॥ द्राक्षामधुककुष्ठैर्वा तद्वत्सैन्धवसंयुतैः । ससैन्धवैः शृतं क्षीरं रुजारागनिवर्हणम् ॥ शतावरी पृथक्पर्णीमुस्तामलकपद्मकैः । साजक्षीरैः शृतं सर्पिर्दाहशूलनिवर्हणम् ॥ वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे । काकोल्यादिप्रतीवापं तद्युञ्ज्यात्सर्व्वकर्मसु ॥ शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोचयेत् । ततः सिरां दहेद्वापि मतिमान् कीर्त्तितं तथादृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे । मेषाशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥ सुमनायाश्च पुष्पाणि मुक्ता वैदूर्य्यमेव च । अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ॥ प्रविधाय च तद्वर्त्तीर्योजयेच्चाञ्जने भिषक् । स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ॥ मरिचानि च तद्वर्त्तीः कारयेच्चापि पूर्व्ववत् । दृष्टिस्थैर्य्यार्थमेतत्तु विदध्यादञ्जने हितं ॥ भूयो वक्ष्यामि मुख्यानि विस्तरेणाञ्जनानि च। कल्पे नानाप्रकाराणि तान्यपीह प्रयोजयेत् ॥

## ॥ अष्टादशोऽध्यायः ॥

अथातः क्रियाकल्पं व्याख्यास्यामः ।

सर्व्वशास्त्रार्थतत्वज्ञस्तपोदृष्टिरुदारधीः । वैश्वामित्रं शशासाथ शिष्यं काशिपतिमुनिः ॥ तर्पणं पुटपाकश्च सेकश्चाश्च्योतनाञ्जने । तत्र तत्रोपदिष्टानि तेषां व्यासं निवोध मे ॥ संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने । पूर्वाह्णे चापराह्णे वा कार्य्यमक्ष्णोश्च तर्पणं ॥ वातातपरजोहीने वेश्मन्युत्तानशायिनः । आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ॥समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः।पूरयेद्घृतमण्डस्य विलीनस्य सुखोदकैः॥ आपक्ष्माग्रात्ततःस्थाप्यं पञ्चतद्वाक्शतानि चास्वस्थे कफे षट्पित्तेऽष्टौ दशवातेतदुत्तमं।

रोगस्थानविशेषेण केचित्कालंप्रचक्षते।यथाक्रमोपदिष्टेषुवर्त्मसु कंपक्ष्मसु च॥दशद्वादशाम-थाष्टौचवाक् शतानिविभावयेत् । ततश्चापाङ्गतः स्नेहं स्रावयित्वाविशोधयेत्॥खिन्नेनय-वपिष्टेनस्नेहवीर्य्यैरितस्ततः।यथास्वं धूमपानेनकफमस्य विशोधयेत्॥एकाहं वा त्र्यहं-वापिपञ्चाहञ्चेष्यतेपरं।तर्पणेतृप्तिलिङ्गानिनेत्रस्येमानीलक्षयेत्॥सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवं।निर्वृतिर्व्याधिविध्वंसः क्रियालाघवमेवच ॥गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेह-वत्।ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम् ॥ रूक्षमाविलमस्राढ्यमसहं रूपदर्शने। व्या-धिवृद्धिश्च तज्ज्ञेयं हीनतर्पितमक्षि च ॥ अनयोर्दोषवाहुल्यात्प्रयतेत चिकित्सिते । धूम-नस्याञ्जनैः सेकैः रूक्षैः स्निग्धैश्च योगवित् ॥ ताम्यत्यतिविशुष्कञ्च यदक्षि चातिदारुणं । शीर्णपक्ष्माविलं जिह्मं रोगक्लिष्टञ्च यद्भृशं ॥ तदक्षि तर्पणादेव लभेतोर्ज्जामसंशयं । दु-र्दिनात्युष्णशीतेषु चिन्तायां संभ्रमेषु च ॥ अशान्तोपद्रवे वाक्षिण तर्पणं न प्रशस्यते । पु-टपाकस्तथैतेषु नस्यं येषु च गर्हितं ॥ तर्पणार्हा न ये प्रोक्ताः स्नेहपानाक्षमाश्च ये । त-तः अशान्तदोषेषु पुटपाकक्षमेषु च ॥ पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् । स्ने-हनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥ हितःस्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेख-नः । दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् ॥ स्नेहमांसवसामज्जमेदःस्वाद्वौषधैः कृतः स्नेहनः पुटपाकन्तु धार्य्यौ द्वे वाक्शते तु सः ॥ जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसम्भृ-तैः । कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥ समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः । लेखनो वाक्शतं तस्य परं धारणमुच्यते ॥ स्तन्यजाङ्गलमध्वाज्य तिक्तद्रव्यविपाचितः । लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः ॥ वितरेत्तर्पणोक्तन्तु धूमं हित्वातु रोपणम् । स्नेहस्वेदौ द्वयोःकार्य्यौकार्य्यौ नैवचरोपणे॥एकाहंवा वाद्व्यहं वापित्र्यहं वाप्यवचारणं।य-न्त्रणां तु क्रियाकालाद्द्विगुणं कालमिष्यते॥ तेजांस्यनिलमाकाशमादर्शम्भास्वराणि च । नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा ॥ मिथ्योपचारादनयर्य्यौ व्याधिरुपजायते । अ-ञ्जनाश्चयोतनस्वेदैर्यथास्वन्तमुपाचरेत् ॥ प्रसन्नवर्णं विशदं वातातपसहं लघु । सुखस्व-प्नप्रबोध्यक्षि पुटपाकगुणान्वितम् ॥ अतियोगाद्रुजः शोफः पिडकास्तिमिरोद्गमः । पा-कोऽश्रुहर्षणञ्चापि हीने दोषोद्गमस्तथा ॥ अत ऊर्द्ध्वं प्रवक्ष्यामिपुटपाकप्रसाधनं । द्वौ विल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्यपेषितौ ॥ द्रव्याणां विल्वमात्रन्तु द्रवाणां कुडवो मतः । तदैकत्र समालोड्य पत्रैः सुपरिवेष्टितं ॥ काश्मरीकुमुदैरण्डपद्मिनीकदलीभवैः । मृदावलिप्तमङ्गारे- खादिरैरवकूलयेत् ॥ कतकाश्मन्तकैरण्डपाटलावृषवादरैः । सक्षीर-द्रुमकाष्ठैर्वा गोमयैर्वापि युक्तितः ॥ स्विन्नमुद्धृत्य निःपीड्य रसमादाय तं न्टणां । तर्पणो-क्तेन विधिना ययावदवचारयेत् ॥ कनीनके निषेच्यः स्यान्नित्यमुत्तानशायिनः । रक्ते पि-त्ते च तौ शीतौ कोष्णौ वातकफापहौ ॥ अत्युष्णौ सततं दाहपाककरौ स्मृतौ । आ-

प्लु तौ शीतलौ चाश्रु स्तम्भरुग्घर्षकारकौ ॥ अतिमात्रौ कषायत्वसङ्कोचस्फुरणावहौ । हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम् ॥ युक्तौ क्षतौ दाहशोफरुग्घर्षस्रावनाशनौ। कण्डूपदेहदूषीकारक्तराजिविनाशनौ ॥ यस्मात्परिहरेन्दोषान् विदध्यात्तौ सुखावहौ । व्यापदश्च यथादोषं नस्यधूमाञ्जनैर्जयेत् ॥ आद्यन्तयोश्चाप्यनयोः स्वेदमुष्णाम्बु चैलिकः । तथाहितोऽवसाने च धूमः श्लेष्मसमुच्छ्रितौ ॥ यथादोषोपयुक्तन्तु नातिप्रबलमोजसा । रोगमाश्चोतनं हन्ति सेकस्तु बलवत्तरं॥ तौ त्रिधैवोपयुज्येते रोगेषु पुटपाकवत् । लेखने सप्त चाष्टौ वा बिन्दवः स्नैहिके दश ॥ आश्चोतने प्रयोक्तव्या द्वादशैव तु रोपणे । सेकस्य द्विगुणः कालः पुटपाकात्परो मतः ॥ अथ वा कार्य्यनिर्वृत्तेरुपयोगो यथाक्रमं । पूर्वापराह्णे मध्याह्ने रुजाकालेषु चोभयोः॥ योगायोगान् स्नेहसेके तर्पणोक्तान् प्रचक्षते । रोगान् सिरसिसंभूतान्हत्वातिप्रबलान्गुणान् करोति शिरसो वस्तिरुक्ता ये मूर्द्धतैलिकाः । शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु ॥ ऋज्वासीनस्य बध्नीयाद्वस्तिकोशं ततो दृढम्॥यथाव्याधिशृतस्नेहपूर्णसंगस्य धारयेत्॥तर्पणोक्तं दशगुणं यथा दोषं विधानवित् । व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले । नेत्रएव स्थिते दोषे प्राप्तमञ्जनमाचरेत् ॥ लेखनं रोपणञ्चापि प्रसादनमथापि वा ॥ तत्र पञ्च रसान्व्यस्तानाद्यैकरसवर्ज्जितान् । पञ्चधा लेखनं युञ्ज्याद्यथादोषमतन्द्रितः ॥ नेत्रवर्त्मशिराकोशस्रोतःशृङ्गाटकाश्रितम् । मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत् ॥ कषायतिक्तकञ्चापि सस्नेहं रोपणं मतम् । तत्स्नेहशैत्याद्वर्ण्यंस्याद्दृष्टेश्च बलवर्द्धनम् ॥ मधुरं स्नेहसम्पन्नमञ्जनन्तु प्रसादनम् । दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितम् ॥ यथादोषं प्रयोज्यानि तानि दोषविशारदैः । अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥ गुटिकारससंचूर्णानि त्रिविधान्यञ्जनानि तु । यथापूर्व्वं बलं तेषां श्रेष्ठमाहुर्मनीषिणः ॥ हरेणुमात्रा वर्त्तिः स्याल्लेखनस्य प्रमाणतः । प्रसादनस्य चाध्यर्द्धा द्विगुणा रोपणस्य च ॥ रसाञ्जनस्य मात्रा तु पिष्टवर्त्तिसिता मता । द्वित्रिचतुःशलाकाश्च चूर्णस्याप्यनुपूर्व्वशः ॥ तेषां तुल्यगुणान्येवं विदध्याञ्जाजनान्यपि । सौवर्ण्यं राजतं शार्ङ्गन्ताम्रं वैदूर्य्यकांस्यजम्॥ आयसानि च योज्यानि शलाकाश्च यथाक्रमम् । वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला ॥ अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा । ओडुम्बर्य्यश्मजातापि शारीरी वा हिता भवेत् ॥ वामेनाक्षि विनिर्मुज्य हस्तेन सुसमाहितः । शलाकया दक्षिणेन क्षिपेत्कानीनमञ्जनम् ॥ आपाङ्गं वा यथायोग्यं कुर्य्याच्चापि गतागतम् । वर्त्मोपलेपि वा यत्तदङ्गुल्यैव प्रयोजयेत् ॥ अक्षि नात्यन्तयोरञ्जयाद्बाधमानोऽपि भिषक् । नवा निर्वान्तदोषेक्षिण धावनं संप्रयोजयेत्॥ दोषः प्रतिनिवृत्तः सन् हन्याद्दृष्टेर्बलन्तथा । गतदोषमपेताश्रु पश्यद्यत्सम्यगम्भसा ॥ प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनन्ततः । अमोदावर्त्तरुदितमद्यक्रोधभयज्वरैः ॥ वेगाघा

तच्छिरोदोषैश्चार्त्तानां नेष्यतेऽञ्जनम्। रागरुक्तिमिरास्रावशूलसंरम्भसंभ्रमान्॥ निद्राक्षये क्रि-
याशक्तिं प्रवाते दृग्बलक्षयं। रजोधूमहते रागस्रावाधोमन्यस्तमवं ॥ संरम्भशूलौ नस्या-
न्ते शिरोरुजि शिरोरुजं। शिरःस्नातेऽतिशीते च ज्वरावनुदितेऽपि च ॥ दोषस्यैर्व्यादिपा-
र्थं स्याद्दोषोत्क्लेशङ्करोति च। अजीर्णेप्येवमेव स्यात्स्रोतोमार्गविरोधनात् ॥ दोषवेगोद-
ये दत्तं कुर्य्यात्तांस्तानुपद्रवान्। तस्मात्परिहरन्दोषानञ्जनं साधु योजयेत्॥ लेखनस्य वि-
शेषेण काल एष प्रकीर्त्तितः ॥ व्यापदश्च जयेदेताः सेकाश्च्योतनलेपनैः ॥ यथास्वं धूम-
कवलैर्नस्यैश्चापि समुत्थिताः। विशदं लघु नास्रावि क्रियापटु सुनिर्मलं ॥ संशान्तोपद्र-
वं नेत्रं विरिक्तं सम्यगादिशेत्। जिह्मं दारुणदुर्व्वर्णं स्रस्तं रूक्षमतीव च ॥ नेत्रं वि-
रेकातियोगे स्यन्दते चातिमात्रशः। ततः सन्तर्पणं कार्य्यं विधानं चानिलापहं ॥ अति-
मन्दविरिक्तं स्यादुदग्रतरदोषवत्। धूमनस्याञ्जनैस्तत्र हितं दोषावसेचनं ॥ स्नेहवर्णब-
लोपेतं प्रसन्नं दोषवर्ज्जितं। ज्ञेयं प्रसादने सम्यगुपयुक्तेऽक्षिनिर्वृतं ॥ किञ्चिद्धीनविकारं
स्यात्तर्पणाद्धितादति। तत्र दोषहरं रूक्षं भेषजं शस्यते मृदु॥ साधारणमपि ज्ञेयमेवं
रोपणलक्षणं। प्रसादनवदाचष्टे तस्मिन् युक्तेऽतिभेषजं ॥ स्नेहनं रोपणं वापि हीनयु-
क्तमपार्थकं। कर्त्तव्यं मात्रया तस्मादञ्जनं सिद्धिमिच्छता॥ पुटपाकक्रियाद्यासु क्रिया-
स्वेकैव कल्पना। सहस्रशश्चाञ्जनेषु वीजेनोक्तेन पूजिताः ॥ दृष्टेर्बलविवृद्ध्यर्थं याप्यरोग-
क्षयाय च। राजार्हाण्याग्र्याणि निबोधैतान्यतः परं॥ अष्टौ भागानञ्जनस्य नीलोत्पलं स-
मन्विषः। औडुम्बरं शातकुम्भं राजतञ्च समासतः ॥ एकादशैतान्नु भागांस्तु योजयेत्कु-
शलो भिषक्। मूषाक्षिप्तं तदाध्मातमावृतं जातवेदसि ॥ खदिराश्मन्तकाङ्गारैर्गोशक्र-
ङ्गिरयापि वा। गवां शकृद्रसे मूत्रे दध्नि सर्पिषि माक्षिके ॥ तैलमद्यवसामज्जसर्वगन्धोद-
केषु च। द्राक्षारसेक्षुत्रिफलारसेषु सुहिमेषु च ॥ सारिवादिकषाये च कषाये चोत्पला-
दिके। निषेचयेत्पृथक्चैनं ध्मातं ध्मातं पुनः पुनः ॥ ततोऽन्तरीक्षे सप्ताहं प्रोतवद्ध
स्थितं जले। विशोष्य चूर्णयेन्मुक्तां स्फटिकं विद्रुमं तथा ॥ कालानुसारिवां चैव शुचि
रावाप्य योगतः। एतच्चूर्णाञ्जनं श्रेष्ठं निहितं भाजने शुभे॥ दन्तस्फटिकवैदूर्य्यशङ्खशैला-
सनोद्भवे। शातकुम्भेऽथ शार्ङ्गे वा राजते वा सुसंस्कृते ॥ सहस्रपाकवत्पूजां कृत्वा रा-
ज्ञः प्रयोजयेत्। तेनाञ्जिताक्षो नृपतिर्भवेत्सर्वजनप्रियः ॥ अधृष्यः सर्वभूतानां दृष्टिरोग-
विवर्ज्जितः। कुष्ठचन्दनमेलाश्च पत्रं मधुकमञ्जनं ॥ मेषशृङ्गस्य पुष्पाणि चक्रं रत्नानि
सप्त च। उत्पलस्य हरिद्रे च पद्मस्यापि च केशरं ॥ नागपुष्पसुशीराणि पिप्पलीतुल्यमुस्त-
मम्। कुक्कुटाण्डकपालानि दार्वीं पथ्यां सरोचनां ॥ मरिचान्यक्षमज्जानं तुल्यांश्च गृह-
गोधिकां ॥ कृत्वा सूक्ष्मं शुचिचूर्णं न्यसेदभ्यर्च्य पूर्ववत्। एतद्भद्रोदयं नाम सदैवार्हति
भूमिपः। चक्रं समरिचञ्चैव मांसीं शैलेयमेव च॥ तुल्यांशानि समानैस्तैः समग्रैस्तु मनः

शिला। पत्रस्य भागाश्चत्वारो द्विगुणं सर्वतोऽञ्जनं। तावच्च पूयष्टीमधुकं वयञ्चैतदञ्जनम् ॥ मनःशिला देवकाष्ठं रजन्यौ त्रिफलोषणं॥ लाचालसुनमञ्जिष्ठासैन्धवैलाः समाचिकाः। रोध्रं शावरकं चूर्णमायसं ताम्रमेव च कालानुसारिवाश्चैव कुक्कुटाण्डदलानि च। तुल्यानि पयसा पिष्ट्वा गुटिकां कारयेद्बुधः॥ कण्डूतिमिरशुक्लार्मरक्तराजुपशान्तये। कांस्यापमार्ज्जनसमीमधुकं सैन्धवं नतं॥ एरण्डमूलञ्च समं ह्रहत्यंशद्वयान्वितं। आजेन पयसा पिष्ट्वा ताम्रपात्रं प्रलेपयेत्॥ सप्तक्रत्वस्तु ता वर्त्तश्छायाशुष्का रुजापहाः। पथ्यातुत्थकयष्ट्याह्वस्तुबयैर्मरिचषोडश॥ पथ्या सर्वविकारेषु वर्त्तीशीताम्बुपेषिता॥ रसक्रिया विधानेन यथोक्तविधिकोविदः। पिण्डाञ्जनानि कुर्वीत यथायोगमतन्द्रितः॥

# एकोनविंशोऽध्यायः

अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः।

अभ्याहते तु नयने बहुधा नराणां संरम्भ रागतुमुलासु रुजासु धीमान्। नस्यप्रलेपपरिषेचनतर्पणाद्यमुक्तं पुनः चतजपित्तजशूलपथ्यं॥दृष्टिप्रसादजननं विधमाशु कुर्य्यात् स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः। स्वेदाग्निधूमभयशोकरुजाभिघातै रभ्याहतामपितथैव भिषक्चिकित्सेत्॥ सद्योहते नयन एष विधिस्तदूर्द्धं स्यन्देरितो भवति दोषमवेच्य कार्य्यः। अभ्याहतं नयनमीषदथास्य वाष्पसंस्वेदितं भवति तन्निरुजं चणेन॥ साध्यं चतं पटलसेकमुभे तुकृच्छ्रं त्रीणि चतानि पटलानि विवर्ज्जयेत्तु। स्यात् पिच्चितञ्च नयनं ह्यतिचावसन्नं स्रस्तं च्युतञ्च हतदृक् च भवेत्तु याप्यं॥ विस्तर्णदृष्टितनुरागमसत्प्रदर्शिसाध्यं यथास्थितमनाविलदर्शनञ्च। प्राणोपरोधवमनचवकण्ठरोधैरुन्नम्यमाशु नयनं यदतिप्रविष्टं॥ नेत्रे लम्बिनि विधिर्विहितः पुरस्तादुच्छिंहनं शिरसि वार्य्यवसेचनञ्च। षट्सप्ततिर्नयनजा य इमे प्रदिष्टा रोगा भवन्त्यमहतां महताञ्च तेभ्यः॥ स्तन्यप्रकोपकफमारुतपित्तरक्तैर्बालाचिवर्त्मभव एव कुकूणकोऽन्यः। मृद्नाति नेत्रमतिकण्डुमथाचिकूटनासाललाटमपि तेन शिशुः स नित्यम्॥ सूर्य्यप्रभां न सहते स्रवति प्रवद्धं तस्याहरेद्रुधिरमाशुविनिर्लिखेच्च। चौद्रायुतैश्च कटुभिःप्रसारयेत्तु मातुः शिशोरभिहितञ्च विधिं विदध्यात्॥ तं वामयेत्तु मधुसैन्धवसंप्रयुक्तैः पीतम्पयः खलु फलै खरमञ्जरीणां॥ स्यात्पिप्पलीलवणमाचिकसंयुतैर्वानैनं वमन्तमपि वामयितुं यतेत। दत्वा वचा मगनदुग्धभुजे प्रयोज्यमूर्द्धं ततः फलयुतं वमनं विधिज्ञैः। जम्ब्वाम्रधात्रशणदलैः परिधावनार्थं कार्य्यं कषायमवसेचनमेव चापि। आश्च्योतने च हितमत्र घृतं गुडूची सिद्धं तथा हुरपि च त्रिफलाविपक्कं॥ नेपालजामरिचशङ्खरसाञ्जनानि सि-

न्यु प्रसूतगुडमाक्षिकसंयुतानि । स्यादञ्जनं मधुरसामधुताम्रकैर्वाकृष्णायसं घृतपयोमटु वापि दग्धं ॥ व्योषंपलाण्डु मधुकं लवणोत्तमञ्च लाक्षाश्च गैरिकयुता गुटिकाञ्जनं वा निम्बच्छदं मधुकदार्व्वि सताम्रलोध्रमिच्छन्ति चात्रविषजोऽञ्जनमंशतुल्यं स्रोतोजशङ्खदधिसैन्धवमर्द्दपच्चं शुक्तं शिशोर्नु दति भावितमञ्जनेन । स्यन्दे कफाभिहितं क्रममाचरेच्च बालस्य रोगगकुशलोऽचिगदं जिघांसु ॥ समुद्रइवगम्भीरं वधे शक्यं चिकित्सितं । वक्तुं निरवशेषेण स्लोकानामयुतैरपि ॥ सहस्रैरपि च प्रोक्तमर्थमल्पमतिर्नरः ॥ तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः। तदिदं बहुगूढ़ार्थं चिकित्सावीजमीरितं । कुशलेनाभिपन्नं तद्बहुधाभिप्ररोहति ॥ तस्मान्मतिमता नित्यं नानाशास्त्रार्थदर्शिनासर्व्वं सूक्ष्मगाधार्थं शास्त्रमागमवर्द्धिना ॥

## त्रिंशत्तमोऽध्यायः ॥

अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः॥

कर्णशूलं प्रणादश्च वाधिर्य्यं च्वेड़ एवच ।कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च ॥ क्रमिकर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा । कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्विधम् ॥ तथार्व्वुदं सप्तविधं शोफश्चापि चतुर्विधः । एते कर्णगतारोगा अष्टाविंशतिरीरिताः ॥ समीरणः स्रोत्रगतोऽन्यथाचरः समन्ततः शूलमतीव कर्णयोः । करोति दोषैश्च यथा समावृतः स कर्णशूलः कथितो दुराचरः ॥ यदा तु नाडीषु विमार्गमागतः स एव शब्दाभिवहासु तिष्ठति । शृणोति शब्दान्विविधांस्तदा नरः प्रणादमेनं कथयन्ति चामयं ॥ स एव शब्दाभिवहा यदा शिराः कफानुयातो व्यनुसृत्य तिष्ठति । तदा नरस्याप्रतिकारसेविनो भवेत्तु वाधिर्यमसंशयं खलु ॥ श्रमात् च्चयाद्रुच्चकषायभोजनात् समीरणः शब्दपथे व्यवस्थितः विरिक्तशीर्षस्य च शीतसेविनः करोति हि च्वेडमतीव कर्णयोः ॥ शिरोऽभिघातादथ वा निमज्जतो जले प्रपाकादथ वापि विद्रधेः। स्रवेत्तु पूयं श्रवणोऽनिलावृतः सकर्णसंस्राव इति प्रकीर्त्तितः ॥ कफेन कण्डूः प्रचितेन कर्णयोर्भृशं भवेत्स्रोतसि कर्णसंज्ञिते । विशोषिते श्लेष्मणि पित्ततेजसा नृणां भवेत्स्रोतसि कर्णगूथकः ॥ सकर्णगूथो द्रवतां यदागतो विलायितो घ्राणमुखं प्रपद्यते । तदा सकर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽभितापनः ॥ यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मच्चिकाः ॥ यदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः क्रमिकर्णकस्तु सः ॥ च्चताभिघातप्रभवस्तु विद्रधि र्भवेत्तथा दोषकृतोपरः पुनः । स रक्तपीतारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान् ॥ भवेत्प्रपाकः खलु पित्तकोपतो विकोथविक्लेदकरश्च कर्णयोः । स्थिते कफे स्रोतसि पित्ततेजसा विलाप्यमाने भृश सम्प्रतापनात् ॥ अवेदनो वाप्यथवा सवे-

दनो घनं स्रवेत्पूति स पूतिकर्णकः। प्रदिष्टलिङ्गान्यर्शांसि तत्त्वतः स्वथशोफार्बुदलिङ्गमीरितम् ॥ मया पुरस्तात्प्रसमीक्ष्य योजयेदिहैव तानि प्रयतो भिषग्वरः ॥

# एकविंशतितमोऽध्यायः ॥

अथातः कर्णगतरोगप्रतिषेधं व्याख्यास्यामः ॥

सामान्यं कर्णरोगेषु घृतपानं रसायनं। अव्यायामोऽशिरःस्नानं ब्रह्मचर्य्यमकत्थनं कर्णशूले प्रणादे च बाधिर्य्ये क्ष्वेडयोरपि। चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥-स्निग्धं वातहरैः स्वेदैर्नरं स्नेहविरेचितं। नाडीस्वेदैरुपचरेत्पिण्डस्वेदैस्तथैव च ॥ विल्वैरण्डार्कवर्षाभूदधित्थाम्रत्तशिग्रुभिः। वस्तगन्धाश्वगन्धाभ्यां तर्कारीयववेणुभिः ॥ आरनालैः शृतैरेभिर्नाडीस्वेदः प्रयोजितः। कफवातसमुत्थानं कर्णशूलं निरस्यति ॥ मीनकुक्कुटलावानां मांसजैः पयसापि वा। पिण्डैः स्वेदञ्च कुर्वीत कर्णशूलनिवारणम् ॥ अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम्। तैलाक्तमस्तुसम्पूर्णं निदध्याच्छ्रवणोपरि। यत्तैलं च्यवते तस्मात् खल्लादङ्गारसाधितात्। तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनां ॥ क्षौमगुग्गुल्वगुरुभिः सघृतैर्धूपयेच्च तं। भक्तोपरि हितं सर्पिर्व्वस्तिकर्म्म च पूजितं ॥ निरन्नो निशि तत्सर्प्पिः पीत्वोपरि पयः पिवेत्। मूर्द्धवस्तिषु नस्ये च मस्तिष्के परिषेचने ॥ शतपाकं बलातैलं प्रशस्तञ्चापि भोजने। कण्टकारीमजाक्षीरे पक्वा क्षीरेण तेन च ॥ विपचेत्कुक्कुटवसां कर्णयोस्तत्प्रपूरणम्। तण्डुलीयकमूलानि फलसङ्कोठजन्तथा ॥ अहिंस्राकेन्द्रिकामूलं सरलं देवदारु च। लसुनं शृङ्गवेरञ्च तथा वंशावलेखनम् ॥ कल्कैरेषां तथाम्लैश्च पचेत्स्नेहं चतुर्व्विधं। वेदनायाः प्रशान्त्यर्थं हितं तत्कर्णपूरणं ॥ लसुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च। कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च। कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहं ॥ वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक्। सर्प्पिः पचेत्तेन कर्णं पूरयेत्कर्णशूलिनः ॥ महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलं। क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ यत्तैलं च्यवते तेभ्यो घृतेभ्यो भाजनोपरि ॥ ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णातिवेदनां। कुर्य्यादेवं भद्रकाष्ठे कुष्ठ कोष्ठे च सारले। मतिमान्दीपिकातैलं कर्णशूलनिवर्हणं ॥ आर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान्। सन्निदध्यात्स्नुहि काण्डे कोरिते तच्छदावृते। पुटपाटकक्रमस्विन्नान्पीड़येदारसागमात्। सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥ कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः। सुखोष्णैः पूरयेत्कर्णं तच्छूनविनिवृत्तये। कर्णं कोष्णेन शुक्तेण पूरयेत्कर्णशूलिनः। समुद्रफेणचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥ अष्टानामिह मूत्राणां मूत्रेणान्यतमेनवा। कोष्णेन पूरयेत्कर्णं कर्णशूलोपशान्तये मूत्रेष्वम्लेषु वातघ्ने गणे-

च क्वथिते भिषक् । पचेच्चतुर्व्विधं स्नेहंपूरणं तच्च कर्णयोः॥एता एव क्रियाः कुर्य्यात् पित्तघ्नैः पित्तसंयुते । काकोल्यादौ दशक्षीरं तिक्तं चात्र हितं हविः॥ क्षीरवृक्षप्रबालेषु मधुके चन्दने तथा । कल्कक्वाथे परं पक्वं शर्करा मधुकैः सरैः ॥ इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ । तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः । सुरसादौ कृतं तैलं पक्वसूले महत्यपि । मातुलुङ्गरसः शुक्तं लशुनार्द्रकयोरसः ॥ एकैकः पूरणे पथ्यस्तैलं तैश्च यथा कृतम् । तीक्ष्णा मूर्द्धविरेकाश्च कवलाश्चात्र पूजिताः ॥ कर्णशूलविधिः कृत्स्नः पित्तघ्न· शोणितावृते । शूलप्रणादबाधिर्य्यक्ष्वेडानान्तु प्रकीर्त्तितम् ॥ सामान्यतो विशेषेण वाधिर्य्ये पूरणं शृणु । गवां मूत्रेण विल्वानि पिष्ट्वा तैलं विपाचयेत् ॥ सजलञ्च सदुग्धञ्च बाधिर्य्ये कर्णपूरणम् । सितामधुकविम्बोभिः सिद्धंवाजे पयस्यथ ॥ सिद्धं वा विल्वनिःक्वाथे शीतीभूतं तदुद्धृतं । पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥ विल्वाम्बुगाढं तत्तैलं बाधिर्य्ये कर्णपूरणम् ॥ वक्ष्यते यःप्रतिश्याये विधिः सोऽप्यत्र पूजितः ॥ वातव्याधिषु यश्चोक्तो विधिः स च हितोभवेत् । कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके॥समानं कर्म्म कुर्व्वीत योगान्वैशेषिकानपि । शिरोविरेचनञ्चैव धूपनं पूरणन्तथा ॥ प्रमार्जनं धावनञ्च वीक्ष्य वोत्थावचारयेत् । राजवृक्षादितोयेन सुरसादिगणेन वा । कर्णप्रक्षालनं कार्य्यं चूर्णैरेषाञ्च पूरणम् । चूर्णंपञ्चकषायोत्थं कपित्थरसयोजितं ॥ कर्णस्रावे प्रशंसन्ति पूरणंमधुनासह ।सर्ज्जत्वक्चूर्णसंयुक्त कार्पासीफलजो रसः ॥ योजितो मधुना वापिकर्णस्रावे प्रशस्यते ।लाक्षासर्जरसौ वापि चूर्णितौकर्णपूरणम्॥सशैवलमहावृक्षजम् व्यास्त्रप्रसवायुतं।कुलीरचौद्रमण्डूकोसिद्धंतैलञ्चपूजितम्॥तिन्दकान्यभयारोध्रंसमङ्गामलकं मधु । पूरणञ्चात्र पथ्यं स्यात् कपित्थ रसयोजितम् ॥ रसमाम्रकपित्थानां मधूकधवशालजं । पूरणार्थं प्रशंसन्ति तैलं वा तैर्व्विपाचितं ॥ प्रियङ्गुमधुकाम्बष्ठाधातकीशीतपर्णिभिः । मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन वा ॥ पचेत्तैलं तदास्रावमवगृह्णाति पारणात् । घृष्टं रसाञ्जनं नार्य्याः क्षीरेण चौद्रसंयुतं।प्रशस्यते शिरोत्थेऽपिसास्रावे पूतिकर्णके । निर्गुण्डोस्वरसे तैलं सिन्धुधूमरजोगुडः ॥ पूरणः पूतिकर्णस्य शमनो मधुसंयुतः । कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिं ॥ वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च । कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥ गुग्गुलुः कर्णदौर्गन्ध्ये धूपणं श्रेष्ठमुच्यते । छर्दनं धूमपानञ्च कवडस्य च धारणम् ॥ कर्णक्ष्वेडेहितं तैलं सार्षपञ्चैव पूरणम्। विद्रधौ वापि कुर्वीत विद्रध्युक्तं चिकित्सितम्॥ प्रक्लेद्य धीमांस्तैलेन स्वेदेनप्रविलाप्य व । शोधयेत्कर्णविट्कान्तु भिषक् सम्यक्शलाकया॥ नाडीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् । विधिश्च कफहृत्सर्व्वः कर्णकण्डूमपोहति ॥ अथ कर्णप्रतिनाहे स्नेहस्वेदौ प्रयोजयेत् । ततोऽतिरिक्तशिरसः क्रियां प्राप्तां समाचरेत् । कर्णपाकस्य भैषज्यं

कुर्य्यात्पित्तविसर्प्पवत् । कर्णच्छिद्रे वर्त्तमानं कीटं क्लेदमलादि वा॥ प्रटङ्गेणापहरेद्धी-मानथवापि शलाकया । शेषाणान्तु विकाराणां प्राक्चिकित्सितमीरितं ॥

## ॥ द्वाविंशतितमोऽध्यायः ॥

अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।

अपीनसःपूतिनस्यं नासापाकस्तथैवच । तथा शोणितपित्तञ्च पूयशोणितमेव च ॥चव-थुर्भ्रंशथु र्दीप्तोनासानाहः परिस्रवः। नासाशोषेण सहिता दर्षैकाश्चेरिता गदाः चत्वार्य्य-र्शांसि चत्वारः शोफाः सप्तार्वुदानि च।प्रतिश्यायाश्च ये पञ्च वच्यन्ते सचिकित्सिताः ॥ एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्त्तिताः । आनह्यते यस्य विधूप्यते च पापच्यते क्लिद्यतिचापि नासा ॥ न वेत्तियो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन । तच्चानि-लश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायासमानलिङ्गं ॥ दोषैर्विदग्धैर्गलतालुमूले संवा-सितो यस्य समीरणस्तु । निरेति पूतिर्मुखनासिकाभ्यान्तं पूतिनस्यं प्रवदन्ति रोगम् ॥ घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन्विकारे बलवांश्च पाकः । तंनासिकापाकमिति व्य-वस्येद्विक्लेदकोथावपि यत्र दृष्टौ ॥ चतुर्व्विधं द्विप्रभवं द्विमार्गं वच्यामि भूयः खलु रक्त-पित्तम् । दोषैर्विदग्धे रथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु ॥ नासास्रवेत्पूयमसृग्वि-मिश्रं तं पूयरक्तं प्रवदन्तिरोगम् । घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टे यस्यानिलो नासिकया नरेति ॥ कफानुयातोबहुशः सशब्दस्तं रोगमाहुः चवथुं विधिज्ञाः । तीचणोपयोगादति जिघ्रतो वा भावान् कटूनर्कनिरोचणाद्वा॥ सूत्रादिभिर्वातरुणास्थिमर्म्मख्युद्घाटिते यः चवथुर्निरेति । प्रभ्रश्यते नासिकयैव यश्च सान्द्रोविदग्धो लवणः कफस्तु । प्राक्सञ्चितो मूर्द्धिच पित्ततप्तं प्रभ्रंशथुं व्याधिमुदाहरन्ति ॥ घ्राणेभृशं दाहसमन्विते तु विनिः सृ-रेद्धूम इवेहवायुः ॥ नासाप्रदीप्तेव चयस्य जन्तोर्व्याधिस्तु तं दीप्तमुदाहरन्ति । कफा-वृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात् ॥ घ्राणं वृणोतीव तदा स रो-गो नासाप्रतीनाह इति प्रविष्टः । अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह-नासा ॥ रात्रौ विशेषेण हि तं विकारं नासापरिस्रावमिति व्यवस्येत् । घ्राणाश्रिते श्ले-ष्मणि मारुतेन पित्तेन गाढं परिशोषिते चसमुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्र्यस्तस्य नासप-रिशोष उक्तः दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान् ॥ शाकाक्यसि द्धान्तमवेच्य वापि सर्वात्मकं सप्तममर्वुदं तु । रोगः प्रतिश्यायइहप्रदिष्टः स्रवच्यते पञ्च-विधःपुरस्तात् ॥ शोफाश्च शोफविज्ञाने नासास्रोतोव्यवस्थिताः । निदानेऽर्शांसि नि-र्दिष्टान्येवं तानि विभावयेत् ॥

## त्रयोविंशोऽध्यायः ॥

अथातो नासागतरोगप्रतिषेधं व्याख्यास्यामः ।

पूर्व्वोद्दिष्टे पूतनस्ये च जन्तोः स्नेहस्वेदौ छर्दनं स्रंसनञ्च । युक्तं भक्तं तीक्ष्णमल्पं लघुस्यादुष्णं तोयं धूमपानञ्च काले ॥ हिङ्गु व्योषं वत्सकाख्यं शिवाटी लाक्षा वीजं सौरभं कट्फलंच । उग्रा कुष्ठं तीक्ष्णगन्धाविडङ्गं श्रेष्ठं नित्यं चावपीड़ करञ्जम् ॥ एतैर्द्रव्यैः सार्षपं मूत्रयुक्तं तैलं धीमान्नस्यहेतोः पचेच्च । नासापाके पित्तहृत्संविधानं कार्य्यं सर्व्वं वाह्यमभ्यन्तरं च ॥ हत्वा रक्तं क्षीरवृक्षत्वचश्च साज्याः सेकाःयोजनीयाश्च लेपाः । पच्यामूर्द्ध रक्तपित्तोपशान्तिं नाडीवत्स्यात् पूयरक्ते चिकित्सा॥वाम्ते सम्यक् चावपीड़ं वर्द्धन्ति तीक्ष्णंधूमंशोधनंचाञ्चनस्यम् ।त्वे प्यं नस्यंमूर्द्धवैरेचनीयैर्नाड्या चूर्णं क्षवथौ भ्रंशथौ च॥कुर्य्यात्स्वेदान्मुर्धि वातामयघ्नान् स्निग्धान्धूमान्यद्यदन्यद्धितं च । दीप्ते रोगे पैत्तिकं संविधानं कुर्य्यात्सर्व्वं स्वादु यच्छीतलंच॥नासानाहे स्नेहपानं प्रधानंस्निग्धाधूमा मूर्द्धवस्तिश्च नित्यम् । वलातैलं सर्वथैवोपयोज्यं वातव्याधावन्यदुक्तं च यद्यत् ॥ नास्रावे घ्राण तच्चूर्णमुक्तं नाड्या देवं योऽवपीडश्च तीक्ष्ण । तीक्ष्णं धूमं देवदार्व्वग्निकाभ्यां मांसं वाजं युक्तमत्रादिशन्ति ॥ नासाशोषे क्षीरसर्प्पिः प्रधाणं सिद्ध तैलं चाणुकल्पे च नस्ये । सर्प्पि पानं भोजनं जाङ्गलैश्च स्नेहः स्वेदः स्नैहिकश्चापि धूमः ॥ शेषान् रोगान् घ्राणजान् सन्नियच्छेदुक्त तेषां यद्यथासम्विधानम् ।

## चतुर्विंशोध्यायः ॥

अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः ।

नाडीसेप्रङ्गः शिरसोऽभितापो धूमो रजःशीतमतिप्रतापः । सन्धारणं मूत्रपुरीषयोश्चसद्यः प्रतिश्यायनिदानमुक्तम् ॥ चयङ्गतामूर्द्धनि मारुतादयः पृथक्समस्ताश्च तथैव शोणितम् । प्रकोप्यमाना विविधैः प्रकर्षणैर्नृणां प्रतिस्यायकरा भवन्ति हि॥ शिरोगुरुत्वं क्षवथोः प्रवर्त्तनं तथाङ्गमर्दः परिहृष्टरोमता । उपद्रवाश्चाप्यपरे पृथग्विधा नृणांप्रतिश्यायपुरःसराः स्मृताः ॥ आनद्धा पिहिता नासा तनुस्रावप्रवर्त्तिनी । गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ स्वरोपघातश्च भवेत्प्रतिश्यायेऽनिलात्मके । उष्णः सपीतकः स्रावो घ्राणात्स्रवति पैत्तिके॥कृशोऽतिपाण्डुः सन्तप्तोभवेत्तृष्णाभिपीडितः । सधूमंसहसा वह्निं वमतीव च मानवः॥ कफः कफकृते घ्राणाच्छुक्लःशीतःस्रवेन्मुहुः।शुक्लावभासःशूनाक्षो भवेद्गुरुशिरोमुखः॥शिरोगलौष्ठतालूनांकण्डुयनमतीवच।भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्त्तते॥सम्पक्वो वाप्यपक्वो वास सर्वप्रभवःस्मृतः। लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे ॥ रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥ दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च । मूर्च्छन्ति चा-

त्र क्रमयः श्वेताः स्निग्धास्तथाणवः ॥ क्रिमिमूर्द्धविकारेण समानं चास्य लक्षणम्। प्रक्लि-
द्यति पुनर्नासा पुनश्च परिशुष्यति ॥ मुहुरानह्यते चापि मुहुर्विव्रियते तथा। निश्वासो
च्छ्वासदौर्गन्ध्यं तथा गन्धान्न वेत्ति च ॥ एवं दुष्टप्रतिश्यायं जानीयात्कृच्छ्रसाधनम्।
सर्व्व एव प्रतिश्याया नरस्याप्रतिकारिणः ॥ कालेन रोगजनना जायन्ते दुष्टपीनसाः।
वाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ॥ कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पी-
नसाः ॥ नवं प्रतिश्यायमपास्य सर्व्वमुपाचरेत्सर्पिष एव पानैः। स्वेदैर्विचित्रैर्व्वमनैश्च
युक्तैः कालोपपन्नैरवपीडनैश्च ॥ अपच्यमानस्य हि पाचनार्थं स्वेदो हितोऽम्लैरहिमञ्च
भोज्यः। निषिच्यमाणं पयसार्द्रकं वा सम्पाचयेदिक्षुविकारयोगैः ॥ पक्वं घनं चाप्यव-
लम्बमानं शिरोविरेकैरपकर्षयेत्तम्। विरेचनास्थापनधूमपानैरवेक्ष्य दोषान् कवलग्रहै-
श्च ॥ निवातशय्यासनचेष्टनानि मूर्ध्नी गुरूष्णञ्च तथैव वासः। तीक्ष्णा विरेकाः शिरसः
सधूमा रूक्षं यवान्नं विजया च सेव्या ॥ शीताम्बु योषिच्छिशिरावगाहचिन्तातिरूक्षाश-
नवेगरोधान्। शोकञ्च मद्यानि नवानि चैव विवर्ज्जयेत्पीनसरोगजुष्टः ॥ छर्द्यङ्गसाद-
ज्वरगौरवार्त्तमरोचकारत्यतिसारयुक्तम्। विलङ्घनैः पाचनदीपनीयैरुपाचरेत्पीनसिनं
यथावत् ॥ बहुद्रवैर्वातकफोपसृष्टं प्रच्छर्दयेत्पीनसिनं वयःस्थम्। उपद्रवांश्चापि यथोप-
देशं स्वैर्भेषजैर्भोजनसंविधानैः ॥ नयेद्विदित्वा मृदुतां गतेषु प्राग्लक्षणेषूक्तमथादिशेच्च।
वातिके तु प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम्। पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ न-
स्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम्। पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥
परिषेकान्प्रदेहांश्च कुर्य्यादपि च शीतलान्। श्रीसर्जरसपत्तङ्गप्रियङ्गुमधुशर्कराः ॥ द्रा-
क्षामधूलिकागोजोश्रीपर्णीमधुकैस्तथा। युज्यन्ते कवलाश्चात्र विरेको मधुरैरपि ॥ धव-
त्वक्त्रिफलाश्यामातिल्वकैर्मधुकेन च। श्रीपर्णीरजनीमिश्रैः क्षीरे दशगुणे पचेत् ॥ तैलं
कालोपपन्नं तन्नस्यं स्यादनयोर्हितम्। कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥ य-
वाग्वा वामयेद्दान्तः कफघ्नं क्रममाचरेत्। उभे बले बृहत्यौ च विडङ्गं सत्रिकण्टकम् ॥
श्वेतामूलं सदाभद्रां वर्षाभूञ्चात्र संहरेत्। तैलमेभिर्विपक्वन्तु नस्यमस्योपकल्पयेत् ॥
सरलाकिणिहीदारुनिकुम्भेङ्गुदिभिः कृताः। वर्त्तयश्चोपयोज्याः स्युर्धूमपाने यथा-
विधि ॥ सर्पींषि कटुतिक्तानि तीक्ष्णा धूमाः कटूनि च। भेषजान्युपयुक्तानि हन्युः सर्व्व-
प्रकोपजम् ॥ रसाञ्जने सातिविषे मुस्तायां भद्रदारुणि तैलं विपक्वं नस्यार्थे विदध्याच्चा-
त्र बुद्धिमान् ॥ मुस्तातेजोवतीपाठाकट्फलकटुका वचा। सर्षपाः पिप्पलीमूलं पिप्पल्यः सैन्ध-
वाग्निकौ ॥ तुत्थं करञ्जबीजञ्च लवणं भद्रदारु च। एतैः कृतं कषायन्तु कवले संप्रयोज-
येत् ॥ हितं मूर्द्धविरेकेण तैलमेभिर्विपाचितम्। क्षीरसर्द्धजले क्वाथ्यं जाङ्गलैर्मृगपक्षि-
भिः ॥ एतैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि। हिमे क्षीरावशिष्टेऽस्मिन् घृतमुत्पाद्य य-

त्नत: ॥ सर्वगन्धासितानन्ता मधुकं चन्दनं तथा । आवाप्य विपचेद्भूयो दश-चीरन्तु तद्घृतम् ॥ नस्यप्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति । यथास्वं दोषश-मनैस्तैलं कुर्याच्च यत्नत: ॥ सस्नूनपित्तास्तूद्दिष्टा: क्रिया क्रिमिषु योजयेत् । यापना-र्थं क्रमिघ्नानि भेषजानि च बुद्धिमान् ॥

## पञ्चविंशोऽध्याय: ॥

अथातो शिरोरोगविज्ञानीयमध्यायं व्याख्यास्याम: ॥

शिरो रुजन्ति मर्त्यानां वातपित्तकफैस्त्रिभि: । सन्निपातेन रक्तेन चयेण क्रिमिभि-स्तथा ॥ सूर्य्यावर्त्तानन्तवातार्द्धावभेदकशङ्खकै: । एकादशप्रकारस्य लक्षणं संप्रवक्ष्यते ॥ य-स्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रानिशिचातिमात्रम् । बन्धोपतापैश्च भवेद्विशेष:-शिरोऽभिताप: स समीरणेन ॥ यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमवती च नासा शीतेन रात्रौ च भवेद्विशेष: शिरोऽभिताप: स तु पित्तकोपात् ॥ शिरोगलं यस्य कफोप-दिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च । शूनाक्षिकूटं वदने च यस्य शिरोऽभिताप: स कफप्र-कोपात् ॥ शिरोऽभितापे त्रितयप्रवृत्ते सर्व्वाणि लिङ्गानि समुद्भवन्ति । रक्तात्मक: पित्तस-मानलिङ्ग: स्पर्शासहत्वं शिरसो भवेच्च ॥ वसाबलासक्षतसम्भवानां शिरोगतानामिह सं-चयेण । चयप्रवृत्त: शिरसोऽभिताप: कष्टो भवेदुग्ररुजोऽतिमात्रं ॥ संस्वेदनच्छर्दनधूमन-स्यैरसृग्विमोचैश्च विवृद्धिमेति । निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्त: ॥ घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोऽभिताप: क्रमिभि: स घोर: । सूर्य्योदयंवा-प्रतिमन्दमन्दमक्षिभ्रुवं रुक्समुपैति गाढम्॥ विवर्द्धतेचांशुमता सहैव सूर्य्यापवृत्तौ विनि-वर्त्तते च । शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तु: सुखमाप्नुयाच्च ॥ तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम् । दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटां सरुजां सुतीव्राम् ॥ कुर्व्वन्ति साक्षिभ्रुवशङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु । गण्डस्य पार्श्वेषु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ॥ अनन्तवातं तमुदाहरन्ति दोषत्र-योत्थं शिरसो विकारम् । यस्योत्तमाङ्गार्द्धमतीव जन्तो: सम्भेदतोदभ्रमशूलजुष्टं ॥ पक्षा-द्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं त्रितयाद्व्यवस्येत् । शङ्खाश्रितो वायुरुदीर्णवेग: कृतानु-यात्र: कफपित्तरक्तै: ॥ रुज: सुतीव्रा: प्रतनोति मूर्ध्नि विशेषतश्चापि हि शङ्खयोस्तु । सु-कष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविद: पुराणा: ॥ व्याधिं वदन्त्युद्गतमृत्युकल्पं भिषक्सहस्रैरपि दुर्निवारम् ॥

## षड्विंशोऽध्याय: ॥

अथात: शिरोरोगप्रतिषेधं व्याख्यास्याम: ॥

वातव्याधिविधि: कार्य्यशिरोरोगेऽनिलात्मके। पयोनुपानं सेवेत घृतं तैलमथापि वा॥ मुद्गान्कुलत्थान्माषांश्च खादेच निशि केवलान्॥ कटूष्णांश्च ससर्पिष्कानुष्णं चानु पय: पिवेत्। पिवेद्वा पयसा तैलं तत्कल्कं वापि मानव: ॥ वातघ्नसिद्धै: चीरैश्च सुखोष्णै: से-कमादिशेत्। तत्सिद्धै: पायसैर्वापि सुखोष्णैर्लेपयेच्छिर: ॥स्विन्नैर्वा मत्स्यपिशितै: कृश-रैर्वा ससैन्धवै:। चन्दनोत्पलकुष्ठैर्वा सुस्नक्ष्णैर्म्मगधायुतै: ॥ स्निग्धस्य तैलं नस्यं स्यात्कु-लीरसमाधितम्। तृणाद्ये गणे चुण्णे चोरमर्द्दोदकं पचेत्॥चीरशेषं च तन्मध्यं पीतं सा रमुपाहरेत्। ततो मधुरकै: सिद्धं नस्ये तत्पूजितं हवि:॥ तस्मिन्विपक्के चीरे च पेयं स-र्पि: सशर्करं।धूमश्चास्य यथाकालं स्नैहिकं योजयेद्भिषक्॥पानाभ्यञ्जन नस्येषु वस्तिक-र्म्मणि सेचने। विदध्याच्चैवृतं धीमान् वलातैलमथापि वा।॥भोजयेच रसै: स्निग्धै: पयो-भिर्वा सुसंस्कृतै:। पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेत् ॥शिरोलेपै: ससर्पिष्कै: परी षेकैश्च शीतलै:। चीरेक्षुरसधान्याम्लमस्तुचौद्रसिताजलै:॥ नखवञ्जुलकल्हारचन्दनोत्प-लपद्मकै:। शङ्खशैवलयष्ट्याह्वमुस्ताम्भोरुहसंयुतै: ॥ शिर:प्रलेप: सघृतैर्विसर्पैश्च तथाविधै:। मधुरैश्च सुखालेपैर्नस्यकर्म्मभिरेव च॥ अस्थापनैर्विरेकैश्च पथ्यैश्च स्नेहवस्तिभि:। चीरस-र्पिर्हितं नस्यं वसा वा जाङ्गला शुभा॥ उत्पलादिविपक्केन चीरेणास्थापनं हितम्। भो-जनं जाङ्गलरसै: सर्पिषा चानुवासनम्॥ मधुरै: चीरसर्पिस्तु स्नेहने च सशर्करम्। पि-त्तरक्तघ्नमुद्दिष्टं यच्चान्यदपि तद्धितम् ॥ कफोत्थितं शिरोरोगं जयेत्कफनिवारणै:। शिरोविरेकैर्वमनैस्तीक्ष्णैर्गण्डूषधारणै: ॥ अच्छञ्च पाययेत्सर्पि: स्वेदयेच्चाप्यभीक्ष्णश: शिरोमधुकारेण स्निग्धञ्चापि विरेचयेत्॥ इङ्गुदस्य त्वचावापिमेषशृङ्ग्या च वा भिषक्। आभ्यामेव कृता वर्त्ती धूमपाने प्रयोजयेत् ॥ ध्येयं कट्फलचूर्णं कवलाश्च कफापहा:। शरलाकुष्ठशार्ङ्गेष्टादेवकाष्ठ: सरोहिषै: ॥ चारपिष्टै: सलवणै: सुखोष्णैर्लेपयेच्छिर:। यवषष्टिकयोरन्नं व्योषचारसमायुतम्॥ पटोलमुद्गकौलत्थैर्माचावद्भोजयेद्रसै:। शिरो रोगे त्रिदोषोत्थे त्रिदोषघ्नो विधिर्हित: ॥ सर्पि:पानं विशेषेण पुराणं वा दिशन्ति हि। चयजे चयमासाद्य कर्तव्यो वृंहणो विधि: ॥ पाने नस्ये च सर्पि: स्याद्वातघ्न मधुरै: शृतम् चयकासापहं चात्र सर्पि: पथ्यतमं विदु: ॥ कृमिभिर्भक्ष्यमाणस्य वक्ष्यन्ते शिरस: क्रिया:। नस्यं हि शोणितं दद्यात्तेन मूर्च्छन्ति जन्तव: ॥ मत्ता: शोणितगन्धेन समा-यान्ति यतस्तत:। तेषां निर्हरणं कार्य्यं ततो मूर्द्धविरेचनै: ॥ कृष्णशिग्रुकवीजैर्वा कां-स्यनीलीसमायुतै:। कृमिघ्नैरवपीडैश्च मूत्रपिष्टैरुपाचरेत् ॥ पूतिमत्स्ययुतान् धूमान् कृ-मिघ्नांश्च प्रयोजयेत्। भोजनानि कृमिघ्नानि पानानि विविधानि च॥सूर्य्यावर्त्ते विधात-व्यं नस्यकर्मादिभेषजम्। भोजनं जाङ्गलप्रायं चीरान्नविकृतैर्घृतम्॥ तथार्द्धभेदके

व्याधौ प्राप्तमन्यच्च यद्भवेत् । शिरीषमूलकफलैरवपीडोऽनयोर्हितः ॥ वंशमूलककर्पूरै-रवपीडं प्रयोजयेत् । अवपीडो हितश्चात्र वचामागधिकायुतः ॥ मधुकेनावपीडो वा मधुना सह संयुतः । मनःशिलावपीडो वा मधुना चन्दनेन वा ॥ तेषामन्ते हितं नस्यं सर्पिर्मधुरसान्वितम् । सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥ सर्पिस्तैलयुतो लेपो द्वयोरपि सुखावहः । एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥ अनन्तवाते कर्तव्यः सूर्यावर्तेरितो विधिः । शिराव्यधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥ आहारश्च विधातव्यो वातपित्तविनाशनः । मधुमस्तकसंयावघृतपूरैश्च भोजनैः ॥ क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके । जाङ्गलानां रसैः स्निग्धैराहारश्चात्र शस्यते ॥ शतावरीं तिलान्कृष्णा-न्मधुकं नीलमुत्पलं । दूर्वां पुनर्नवाञ्चैव लेपे साध्ववचारयेत् ॥ महासुगन्धामथ वा पालिन्दीञ्चाम्लपेषितां । शीतांश्चात्र परीषेकान् प्रदेहांनच योजयेत् ॥ अवपीडश्च देयो-ऽत्र सूर्यावर्तनिवारणः । क्रमिघ्नयकृतौ हित्वा शिरोरोगेषु बुद्धिमान् । मधुतैलसमायुक्तैः शिरांस्यतिविरेचयेत् । पश्चात्सर्षपतैलेन ततो नस्यं प्रयोजयेत् ॥ नचेच्छाम्यति व्रजत्येवं स्निग्धस्विन्नांस्ततो भिषक् । पश्चादुपाचरेत्सम्यक् सिराणामथ मोक्षणैः ॥ षट्सप्तति-र्नेत्ररोगा दशाष्टादश कर्णजाः । एकत्रिंशद्घ्राणगताः शिरस्येकादशेह तु ॥ इति विस्तरतोदृष्टाःसलक्षणचिकित्सितागदाः।संहितायामभिहिताःसप्तषष्टिर्मुखामयाः॥ एतावन्तो यथास्थूलमुत्तमाङ्गगतागदाः।अस्मिन्शास्त्रे निगदिताःसङ्ख्यारूपचिकित्सितैः॥ इति सुश्रुतार्य्यविरचित आयुर्वेदशास्त्रे सुश्रुत उत्तरतन्त्रे शालाक्यतन्त्रं समाप्तम् ॥

## सप्तविंशोऽध्यायः ॥

अथातोनवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ।

बालग्रहाणांविज्ञानं साधनञ्चाप्यनन्तरम् । उत्पत्तिं कारणञ्चैव सुश्रुतैकमनाः शृणु ॥ स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च । शकुनी रेवती चैव पूतना चान्धपूतना ॥ पूतना शीतनामा च तथैव मुखमण्डिका । नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः ॥ धात्रीमात्रोः प्राक्प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारहीनान् । त्रस्तान् हृष्टां-स्तर्ज्जितान्क्रन्दितान्वा पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ऐश्वर्य्यस्थास्ते न शक्या विश-न्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः । आप्तं वाक्यं तत्समीक्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति ॥ शूनाक्षः क्षतजसगन्धिकः स्तनद्विड्वक्रास्यो हतचलितैकपक्ष्मनेत्रः । उद्विग्नः सुलुलितचक्षुरल्परोदी स्कन्दार्त्तो भवति च गाढमुष्टिवर्च्चाः ॥ निःसंज्ञो भवति पुन-र्भवेत् ससंज्ञः संरब्धःकरचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भमाणः फेणञ्च प्रसृजति तत्सखाभिपन्नः ॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिःसं स्रावित्रणपरिपीडितः

समन्तात्। स्फोटैश्च प्रतततनुः सदाहपाकैर्व्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ रक्ता
स्यो हरितमलोऽतिपाण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः। रेवत्या व्यथिततनुश्च-
कर्णनासं मृद्नाति ध्रुवमभिपीडितः कुमारः ॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ
विड्भिन्नं सृजति च काकतुल्यगन्धिः। छर्द्यार्त्तो हृषिततनूरुहः कुमारस्तृष्णालुर्भवति च
पूतनागृहीतः ॥ यो द्वेष्टि स्तनमतिसारकासहिक्काछर्दीभिर्ज्ज्वरसहिताभिरर्द्यमानः। दु-
र्व्वर्णः सततमध शयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्धपूतनार्त्तं ॥ उद्विग्नो भृशमतिवेपते
प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः। विस्राङ्गो भृशमतिचार्य्यते च यस्तं जा-
नीयाद्भिषगिहशीतपूतनार्त्तम् ॥ म्लानाङ्गः सुरुचिपाणिपादवक्त्रो बह्वाशी कलुषसिराह-
तोदरो यः। सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः ॥
यः फेणं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः। ज्वर्य्येत प्रत-
तमथो वसासुगन्धिर्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥ प्रस्तब्धो यः स्तनद्वेषी मुच्यते
चाविशन्मुहुः। तं बालं नचिराद्धन्ति ग्रहः सम्पूर्णलक्षणः ॥ विपरीतमतः साध्यं चिकि-
त्सेदचिरार्दितम्। गृहे पुराणहविषाभ्यज्य बालं शुचौ शुचिः ॥ सर्षपान् प्रकिरेत्तेषां
तैलैर्दीपञ्च कारयेत्। सदासन्निहितञ्चापि जुहुयाद्धव्यवाहनं ॥ सर्व्वगन्धौषधीवीजैर्गन्ध-
माल्यैरलङ्कृतम्। अग्नये कृत्तिकाभ्यश्च स्वाहास्वाहेतिसंस्मरन् ॥ नमः स्कन्दाय देवाय
ग्रहाधिपतये नमः। शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिं॥ नीरुजो निर्व्विकारश्च
शिशुर्मे जायतां ध्रुवं ॥

## अष्टाविंशोऽध्यायः ॥

अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः।

स्कन्दग्रहोपसृष्टानां कुमाराणाञ्च शस्यते। वातघ्नद्रुमपत्राणां निःक्वाथः परिषेचने ॥
तेषां मूलेषु सिद्धञ्च तैलमभ्यञ्जने हितम्। सर्वगन्धसुरामण्डकैटर्य्यावापमिष्यते ॥ देव-
दारुणि रास्नायां मधुरेषु द्रुमेषु च। सिद्धं सर्प्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥ सर्षपाः
सर्पनिर्मोको वचा काकादनी घृतम्। उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः॥ सोमव
ल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्। मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥ र-
क्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः। घण्टा च देवाय बलिर्निवे
द्यः सकुक्कुटः स्कन्दगृहे हिताय॥ स्नानं त्रिरात्रं निशि चत्वरेषु कुर्य्यात्पुनः शालियवै
र्नवैस्तु। अभिश्च गायत्र्यभिमन्त्रिताभिःप्रज्वालनं चाहुतिभिश्च वह्नेः॥ रक्षामतः प्रवक्ष्या-
मि बालानां पापनाशिनीं। अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः॥ तपसां तेजसां
चैव यशसां वपुषां तथा ॥ निधनं योऽव्ययो देवः सते स्कन्दः प्रसीदतु। ग्रहसेनापतिर्देवो

देवसेनापतिर्विभुः । देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ देवदेवस्य महतः पावकस्य च यः सुत : । गङ्गोमाकृत्तिकानाञ्च न तेशर्म्म प्रयच्छतु ॥ रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः । रक्तदिव्यवपुर्देवः पातु त्वां क्रौंचसूदनः ॥

## ॥ एकोनत्रिंशत्तमोऽध्यायः ॥

अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ।

विल्वः शिरीषो गोलोमी सुरसादिश्च योगणः । परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ सर्वगन्धविपक्वन्तु तैलमभ्यञ्जने हितम् । चोरवृचकषाये च काकोल्यादौ गणे तथा ॥ विपक्तव्यं घृते वापि पानीयं पयसान्वितम् । उत्सादनं वचा हिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥ गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् । वृषभस्य च रोमाणि योज्यान्युधूपनेऽपि च ॥ अनन्तां कुक्कुटीं विम्बीं मर्कटींचापि धारयेत् । पक्वापक्वानि मांसानि प्रसन्नं रुधिरं पयः ॥ भूतौदनो निवेद्यश्च स्कन्दापस्मारिणोऽवटे । चतुष्पथे च कर्त्तव्यं स्नानमस्य यतात्मना ॥ स्कन्दापस्मारसंज्ञोयःस्कन्दस्य दयितः सखा । विवाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥

## ॥ त्रिंशत्तमोऽध्यायः ॥

अथातः शकुनीप्रतिषेधं व्याख्यास्यामः ।

शकुन्यभिपरीतस्य कार्य्यो वैद्येन जानता । वेतसाम्रकपित्थानां निःक्वाथः परिषेचने ॥ कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशोः । मधुकोशीरह्रीबेरसारिवोत्पलपद्मकैः ॥ रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुं । व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च ॥ स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् । शतावरी मृगैर्वारुनागदन्तीनिदिग्धिकाः ॥ लक्ष्मणां सहदेवांच वृहतीञ्चापि धारयेत् । तिलतण्डुलकं माल्यं हरितालं मनःशिला॥ बलिरेष करञ्चेषु निवेद्यो नियतात्मना । निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथोविधि ॥ स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम् । कुर्य्याच विविधां पूजां शकुन्याः कुसुमैः शुभैः॥ अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता । अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीद तु ॥ दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा । लम्बोदरीश्च शुकर्णी शकुनी ते प्रसीदतु ॥

## एकत्रिंशत्तमोऽध्यायः ॥

अथातो रेवतीप्रतिषेधं व्याख्यास्यामः ।

अश्वगन्धाजशृङ्गी च सारिवा सपुनर्नवा । सहे विदारी च तथा कषायाः सेचने हि-

ता: ॥ तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्जरसेऽपि वा । धवाश्वकर्णककुभधातकीतिन्दुकीषु च ॥ काकोल्यादिगणे चैव पानीयं सर्प्पिरिष्यते ॥ कुलत्थाः शङ्खचूर्णञ्च प्रदेहाः सर्वगन्धिकाः गृध्रोलूकपुरीषाणि यवायवफलोघृतम्॥सन्ध्ययोरुभयोःकार्य्यमेतदुद्धूपनंशिशोः। वरुणारिष्टकमयं रुचकं सेन्दुकं तथा ॥ सततं धारयेच्चापि क्षतं वा पीत्रजीविकम्। शुक्लाः सुमनसोलाजाः पयः शाल्योदनं तथा ॥ वलिर्निवेद्यो गीतीर्थे रेवत्यै प्रयतात्मना। सङ्गमे च भिषक्स्नानं कुर्य्याद्धात्रीकुमारयोः ॥ नानावस्त्रधरा देवी चित्रमाल्यानुलेपना। चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ लम्बा कराला विनता तथैव बहुपुत्रिका। रेवती सततं माता सा ते देवी प्रसीदतु ॥

## द्वात्रिंशत्तमोध्यायः।

अथातः पूतनाप्रतिषेधं व्याख्यास्यामः।

कपीतवङ्काऽरलुको वरुणः पारिभद्रकः। आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥ वचा वयस्था गोलोमो हरितालं मनःशिलाः। कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते ॥ हितं घृतं तुगाक्षीर्य्यां सिद्धं मधुरकेषु च। कुष्टतालीशखदिरं चन्दनस्यन्दने तथा ॥ देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः। एलाहरेणवश्चापि योज्या उद्धूपनेसदा॥ गन्धनाकुलिकुम्भीकामज्जानो वदरस्य। कर्कटास्थि घृतञ्चैव धूपनं सर्षपैः सह ॥ काकादनीं चित्रफलां विम्बीं गुञ्जाश्च धारयेत्। मत्स्योदनञ्च कुर्वीत कृशरां पललं तथा ॥ शरावसम्पुटे कृत्वा बलिं शून्यगृहे हरेत् ॥ उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते। पूज्या च पूतना देवी बलिभिः सोपहारकैः। मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा ॥ शून्यागाराश्रिता देवी दारकंपातु पूतना। दुर्दर्शना सुदुर्गन्धा करालामेघकालिका ॥ भिन्नागाराश्रया देवी दारकं पातु पूतना ॥

## ॥ त्रयस्त्रिंशत्तमोऽध्यायः ॥

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः।

तिक्तकद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने। सुरासौवीरकं कुष्ठं हरितालं मनःशिला ॥ तथा सर्जरसश्चैव तैलार्थमुपदिश्यते। पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥ शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते। सर्व्वगन्धैः प्रदेहश्च गात्रेष्वच्छाश्च शीतलैः ॥ पुरीषं कौक्कुटं केशांश्चर्म्म सर्प्पत्वचन्तथा। जीर्णाञ्च भिक्षुसङ्घाटीं धूपनायोपकल्पयेत् ॥ कुक्कुटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत्। मांसमामं तथा पक्वं शोणितञ्च चतुष्पथे॥ निवेद्यमन्तश्च गृहे शिशोरक्षानिमित्ततः। शिशोश्च स्नपनं कुर्य्यात्सर्व्वगन्धादिकैः शुभैः ॥ कराला पिङ्गला मुण्डा कषायाम्बरवासिनी। देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥

## चतुस्त्रिंशत्तमोऽध्यायः ॥

अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः ।

कपित्थं सुवहां बिम्बीन्तथा बिल्वं प्रचीबलं । नन्दीं भल्लातकीञ्चापि परिषेके प्रयोजयेत् ॥ वस्तमूत्रं गवां मूत्रं मुस्तञ्च सुरदारु च । कुष्ठञ्च गर्व्वगन्धाञ्च तैलार्थमवचारयेत् ॥ रोहिणीसर्जखदिरपलाशककुभत्वचः । निःक्वाथ्य तस्मिन्निःक्वाथे सक्षीरं विपाचितं ॥ गृध्रोलूकपुरीषाणि वस्तगन्धामहेस्त्वचः ॥ निम्बपत्राणि मधुकं धूपनार्थे प्रयोजयेत् । धारयेदपि लम्बाञ्च गुञ्जां काकादनीं तथा ॥ नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् । देव्यै देयश्चोपहारो वारुणीरुधिरं तथा ॥ जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥ मुद्गौदनाशना देवी सुराशोणितपायिनी । जलाशयालया देवी पातु त्वां शीतपूतना ॥

## ॥ पञ्चत्रिंशत्तमोऽध्यायः ॥

अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः ।

कपित्थबिल्वतर्कारीवांशीगन्धर्वहस्तकाः । कुवेराक्षो च योज्याःस्युर्बालानां परिषेचने ॥ स्वरसैर्भृङ्गवृक्षाणां तथाजहरिगन्धयोः । तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने शिशोः॥ मधूलिकायां पयसि तुगाक्षीर्य्याङ्गणे तथा । मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ वचासर्ज्जरसः कुष्ठं सर्पिश्चोद्धूपने हितम् । धारयेदपि जिह्वाश्च चाषचीरल्लिसर्पजाः ॥ वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा । मनःशीलाञ्चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ पायसं सपुरोडासं बल्यर्थमुपहारयेत् । मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ अलङ्कृता रूपवती सुभगा कामरूपिणी । गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥

## ॥ षट्त्रिंशत्तमोऽध्यायः ॥

अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ।

बिल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने । सुरासौवीरधान्याम्लैः परिषेकश्च शस्यते ॥ प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः । पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ पञ्चमूलद्वयक्वाथे क्षीरे मधुरकेषु च । पचेद्घृतञ्च मेधावीखर्जूरीमस्तकेऽपि च ॥ वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत् । उत्सादनं चात्र स्कन्दापस्मारनाशनम् सिद्धार्थकवचाहिङ्गुकुष्ठं चैवाक्षतैः सह । भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥ मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे । धूपः सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥ तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि । कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥ अधस्तादश्ववृक्षस्य स्नपनं चोपदिश्यते । बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥ अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः । बालं पालयिता देवो नैगमेषोऽभिरक्षतु ॥

पदान् व्यालविलेशयाखून् । गृध्रांश्च दद्याद्विविधैः प्रकारैः ससैन्धवान् सर्षपतैलभृष्टान् ॥ देयानि मांसानि च जाङ्गलानि मुद्गाढकीशूपरसाश्च हृद्याः खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसनिसुकल्पितानि।मांसोपदंशांश्च पिबेदरिष्टान्माध्वीकयुक्ता मदिराश्च सेव्याः ॥ अर्कामृताक्षारजलोषितेभ्यः कृत्वा यवेभ्यो विविधांश्च भक्ष्यान्।खादेत् पिबेत्सर्पिरजाविकं वा कृशो यवाग्वा सह भक्तकाले॥सर्पिंर्मधुभ्यां त्रिकटु प्रलिह्याद्व्याविडङ्गोपहितं क्षयार्त्तः।मांसादमांसेषुघृतञ्चसिद्धं शोषापहं क्षौद्रकणासमेतम्॥द्राक्षासितामागधिकावलेहः सक्षौद्रतैलः क्षरोगघाती।घृतेन चाजेनसमाक्षिकेन तुरङ्गगन्धातिलमाषचूर्णं घृतसिताश्वगन्धामगधोद्भवानां चूर्णंघृतंक्षौद्रयुतं प्रलिह्यात्क्षीरं पिबेद्वाप्यथवा जगन्धाविपक्वमेवंलभतेचपुष्टिम्॥तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः पिबेद्वाथपयोऽनुपानम्।उत्सादनेचापितुरङ्गगन्धा-योज्या यवाश्चैव पुनर्नवे च॥कृत्स्ने वृषे तत् कुसुमैश्च सिद्धं सर्पिः पिबेत्क्षौद्रयुतं हिताशी । यक्ष्माणमेतत्प्रबलञ्च कासं श्वासञ्च हन्यादपि पाण्डुताञ्च ॥ शकृद्रसा गोऽश्वगजाव्यजानां क्वाथा मिताश्चापि तथैवभागैः।मूर्वाहरिद्राखदिरद्रुमाणां क्षीरस्य भागस्त्वपरो घृतस्य ॥ भागान् दशैतान् विपचेद्विधिज्ञो दत्वा त्रिवर्गं मधुरञ्च कृत्स्नम् । कटुत्रिकञ्चैव सभद्रदारु घृतोत्तमं यक्ष्मनिवारणाय॥द्वे पञ्चमूल्यौ वरणं करञ्जं भल्लातकंविल्व पुनर्नवे चायवान्कुलत्थानवदराणि भार्गीं पाठां हुताशं समहौकदम्बम्॥कृत्वा कषायं विपचेद्धि तस्य षड्भिर्हि पात्रैर्घृतपात्रमेकम्। व्योषं महाह्वपयोऽभयाञ्च चव्यंसुराख्यं लवणोत्तमञ्च।एतद्धि शोषं जठराग्नि चैव हन्यात्प्रमेहांश्च सहानिलेन।।गोश्वाव्यजेभैणखरोष्ट्रजाजैः शकृद्रसक्षीररसक्षतोत्थैः।द्राक्षाश्वगन्धामगधासिताभिः सिद्धं घृतं यक्ष्मविकारहारि॥एलाजमोदामलकाभयाक्षगायत्र्यरिष्टासनशालसारान्॥विडङ्गभल्लातकचित्रकोग्रा कटुत्रिकाम्भोदसुराष्ट्रजाश्च । पक्त्वा जले तेन पचेद्धिसर्पिस्तस्मिन् सुसिद्धे त्ववतारिते च॥ त्रिंशत्पलान्यत्र सितोपलाया द्वत्व तुगाक्षीरिपलानि षट् च।प्रस्थे घृतस्य द्विगुणञ्च दद्यात्क्षौद्रं ततो मन्थहतंविदध्यात्॥पलं पलं प्रातरतःप्रलिह्यात् पश्चात्पिबेत्क्षीरमतन्द्रितश्च।एतद्धिमेध्यं परमं पवित्रंचक्षुष्यमायुष्यमथोयशस्यम्॥यक्ष्माणमाशु व्यपहन्ति चैतत्पाण्डामयञ्चैव भगन्दरंच । श्वासञ्च हन्ति स्वरभेदकाच हृत्प्लीहगुल्मग्रहणीगदांश्च॥ न चात्र किञ्चित् परिवर्ज्जनीयं रसायनञ्चैतदुपास्यमानम् । प्लीहोदरोक्तं विहितं च सर्पिस्त्रीण्येव चान्यानि हितानि चात्र ॥ उपद्रवांश्च स्वरवैकृतादीन् जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् । अजाशकृन्मूत्रपयोघृतासृङ्मांसालयानि प्रतिसेवमानः ॥ स्नानादिनानाविधिना जहाति मासादशेषं नियमेन शोषम्।रसोनयोगंविधिवत्क्षयार्त्तः क्षीरेण वा नागबलाप्रयोगम्॥सेवेत वा मागधिकाविधानं तथोपयोगं जतु नोऽश्मजस्य।शोकं स्त्रियं क्रोधमसूयनञ्च त्यजेदुदारान्विषयान् भजेत॥वैद्यान् द्विजातीं स्त्रिदशान् गुरूंश्च वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः।

# ॥ द्विचत्वारिंशत्तमोऽध्यायः ॥

अथातो गुल्मप्रतिषेधं व्याख्यास्यामः ॥

यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्टमागताः । जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते ॥ हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः । चयापचयवान्वृत्तः स गुल्म इति कीर्त्तितः ॥ पञ्च गुल्माश्रया नृणां पार्श्वे हृन्नाभिवस्तयः । कुपितानिलमूलत्वाद्गूढमूलोदयादपि ॥ गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते । स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः ॥ अन्तःसरति यस्माच्च न पाकमुपयात्यतः । स व्यस्तैर्जायते दोषैः समस्तैरपि वोच्छ्रितैः ॥ पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः । सदनं मन्दता वह्नेराटोपोऽन्त्रविकूजनम् ॥ विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा । द्वेषोऽन्ने वायुरूर्द्ध्वश्च पूर्व्वरूपेषु गुल्मिनां ॥ हृत्कुक्षिशूलं मुखकण्ठशोषो वायुर्निरोधीविषमाग्निता च । ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसम्भवे तु॥स्वेदज्वराहारविदाहदाहास्तृष्णाङ्गराग. कटुवक्त्रता च।पित्तस्य लिङ्गान्यखिलानि यानि पित्तात्मके तानि भवन्तिगुल्मे ॥ स्तैमित्यमन्नेऽरुचिरङ्गरुदाश्छर्दिःप्रसेको मधुरास्यता च । कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफसम्भवे तु ॥ सर्वात्मकः सर्व्वविकारयुक्तः सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये । नवप्रसूताऽहितभोजना या याचामगर्भं विसृजेद्दती वा ॥ यायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् । पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ॥ न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनाम् । तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥ वातगुल्मार्दितं स्निग्धं युक्तं स्नेहविरेचनैः । उपाचरेद्यथाकालं निरूहैः सानुवासनैः ॥ पित्तगुल्मार्दितं स्निग्धं काकोल्यादिघृतेन तु। विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् श्लेष्मगुल्मार्दितं स्निग्धं पिप्पल्यादिघृतेन तु। तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥ सन्निपातोत्थिते गुल्मे त्रिदोषघ्नोविधिर्हितः । पित्तवद्रक्तगुल्मिन्यानार्य्याःकार्य्यःक्रियाविधिः ॥ विशेषमपरं चास्याः शृणु रक्तविभेदनम् । पलाशभस्मतोयेन सिद्धं सर्पिः प्रयोजयेत् ॥ दद्यादुत्तरवस्तिञ्च पिप्पल्यादिघृतेन तु । उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरोहितः ॥ आनूपौदकमज्जानो वसा तैलं घृतं दधि । विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥ जाङ्गलैककफानान्तु वसा सर्पिश्च पैत्तिके । तैलं जाङ्गलमज्जान एवं गुल्मे कफोत्थिते ॥ धात्रीफलानां स्वरसे षड़ङ्गं विपचेद्घृतत् । शर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ॥ चित्रकव्योषसिन्धूत्यपृथ्वीकाचव्यदाडिमैः । दीप्यकग्रन्थिकाजाजीहवुषाधान्यकैः समैः ॥ दध्यारनालबदरमूलकस्वरसैर्घृतम् । तत्पिवेद्वातगुल्माग्निदौर्बल्याटोपशूलनुत् ॥ हिङ्गुसौवर्च्चलाजाजीविडदाडिमदी-

प्यकैः।पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः॥शटीवचाजगन्धैलासुरसैश्चविपाचितम्।शूला-
नाहरं सर्पिर्दध्ना चानिलगुल्मिनां ॥ विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः। हिङ्गु-
सौवर्च्चलक्षारुग्वृचाम्लाम्लवेतसैः ॥ वोजपूररसोपेतं सर्पिर्दधि चतुर्गुणं । साधितं दाधि-
कंनाम गुल्महृत्प्लीहशूलजित् ॥ रसोनस्वरसे सर्प्पिः पञ्चमूलरसान्वितम् सुरारनाल-
दध्यम्लमूलकस्वरसैः सह ॥ व्योषदाडिमवृचाम्लयवानोचव्यसैन्धवैः ॥ हिंग्वम्लवेतसाजा-
जोदोप्यकैश्च समांशिकैः । सिद्धंगुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ॥ कासापस्मारम-
न्दाग्निप्लीहशूलानिलाञ्जयेत् । दधिसौवीरकं सर्प्पिः क्वाथौ मुद्गकुलत्थजौ ॥ पञ्चाढका-
नि विपचेदावाप्य द्विपलान्यथ । सौवर्चलं स्वार्जिकाञ्च देवदार्व्वथ सैन्धवं ॥ वातगुल्मा-
पहं सर्पिरेतद्दीपनमेव च । तृणमूलकषाये तु जीवनीयैः पचेद्घृतम् ॥ न्यग्रोधादिगणे
वापि गणे वाप्युत्पलादिके। रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयं ॥ आरग्वधा-
दौ विपचेद्दीपनीययुतं घृतम् । क्षारवर्गे पचेच्चान्यत्पचेन्मूत्रगणेऽपरम् ॥ घ्नन्ति गुल्मं क-
फोद्भूतं घृतान्येतान्यसंशयं । यथादोषोच्छ्रयञ्चापि चिकित्सेत्सान्निपातिकं ॥ चूर्णं हिं-
ग्वादिकं वापिघृतं वा प्लीहनाशनं । पिवेद्गुल्मापहंकाले सर्पिस्तैल्वकमेव वा ॥ तिले-
क्षुरकपालाशसार्षपं यवनालजम् । भस्म मूलकजञ्चापि गोजाविखरहस्तिनां॥ मूत्रे-
ण सह्विषौणांच पालिकैश्चावचूर्णितैः । कुष्ठसैन्धवयष्ट्याह्वनागरक्रिमिघातिभिः ॥ साजमो-
दैश्च दशभिः सामुद्राच्च पलैर्युतम् । अयः पात्रेऽग्निनाल्पेन पक्त्वा लेह्यमथोद्धरेत् ॥
तस्य मात्रा पिवेद्दध्ना सुरया सर्पिषापि वा। धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा॥
गुल्मं वातविकाराश्च क्षारोऽयं हन्त्यसंशयं।स्वर्जिकाकुष्ठसहितः क्षारकेतकजोऽपि वा ॥
तैलेन शमयेत्पीतो गुल्मंपवनसम्भवम् । पोतंसुखाम्बुना वापि स्वर्जिकाकुष्ठसैन्धवं ॥ वृषी
कमूरुवूकंच वर्षाभूवृहतीद्वयम्।चित्रकंचजलद्रोणेपक्त्वापादावशेषितम्॥मागधीचित्रकक्षौ-
द्रलिप्तेकुम्भे निधापयेत्। मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्ध संयुतम् ॥ तुषोषितं दशा-
हन्तु जीर्णभक्तः पिवेन्नरः। अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकं ॥ पाठानिकुम्भरज-
नीत्रिकटुत्रिफलाग्निकं। लवणं वृचवीजंच तुल्यं स्यादनवं गुडम् ॥ पथ्याभिः सहितं
चूर्णं गवां मूत्रयुतं पचेत्। गुटिकास्तद्घनोभूतं कृत्वा खादेदभुक्तवान् ॥ गुल्मप्लीहाग्नि-
सादांस्ता नाशयेयुरशेषतः। हृद्रोगंग्रहणीदोषं पाण्डुरोगंच दारुणं ॥ सशूले सोन्नतस्य-
न्दे दाहपाकरुगन्विते। गुल्मे रक्तं जलौकोभिःसिरामोच्चेणवाहरेत् ॥ सुखोष्णा जाङ्ग-
लरसाः सुस्निग्धा व्यक्तसैन्धवाः । कटुत्रिकसमायुक्ता हिताः पाने च गुल्मिनां ॥ पेया वा-
तहरैः सिद्धाः कौलत्थाः संस्कृता रसाः । खलाःसपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥
वद्धवर्च्चोऽनिलानान्तु सार्द्रकंक्षीरमिष्यते। कुम्भीपिण्डेष्टकास्वेदात्कारयेत्कुशलोभिषक् ॥
गुल्मिनः सर्व्व एवोक्ता दुर्व्विरेच्यतमा भृशं। अतश्चैतास्तु सुस्विन्नान् स्रंसनेनोपपाद

येत् ॥ विलेपनाभ्यञ्जनानि तथा सन्दहनानि च । उपनाहाश्च कर्त्तव्याः सुखोष्णाः शा-
ल्वणादयः ॥ उदरोक्तानि सर्पींषि चूर्णवर्त्तिक्रियास्तथा । लवणानि च योज्यानि या-
न्युक्तान्युदराश्रये ॥ वातवर्च्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः । कृत्वा पाथौ विधातव्या व-
र्त्तयो मरिचोत्तराः ॥ दन्तीचित्रकमूलेषु तथा वातहरेषु च । कुर्य्यादरिष्टान् सर्व्वांश्च
सूत्रस्थाने तथेरितान् ॥ खादेद्वाप्यङ्कुरान् भ्रष्टान् पूतीकनृपवृक्षजान् । ऊर्द्ध्ववातमनुष्ण-
ञ्च गुल्मिनं न निरूहयेत् । पिबेत्तु त्र्यूषणनागरं वा सगुडां हरीतकीं । गुग्गुलुं त्रिवृतां द-
न्ती द्रवन्तीं सैन्धवं वचां । सुरूह्य पयोद्राक्षारसं व्रीह्य दलादहं । एवं पीलूनि पिष्टानि पि-
बेत्सलवणानि तु ॥ पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः । युक्ता हन्ति सुरा गुल्मं शी-
घ्रं कालप्रयोजिता । बद्धविण्मारुतोगुल्मो भुञ्जीत पयसा यवान् ॥ कुल्माषान्वा बहु-
स्नेहान् भक्षयेल्लवणोत्तरान् । अथास्योपद्रवः शूलः कथञ्चिदुपजायते । शूलं निखानि-
तमिव सुखं येन तवेत्त्यसौ ॥ तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता । तृष्णा दा-
हो भ्रमोऽन्नस्य विदग्धपरिहृतता ॥ रोमहर्षोऽरुचिश्छर्दिर्भुक्तावृद्धिर्जडाङ्गता । वारवादि-
भिर्यथासङ्ख्यामिश्रैर्वा वीक्ष्ययोजयेत् । पथ्यात्रिलवणं क्षारं हिङ्गुतुम्बुरुपौष्करं । य-
वान्यथ हरिद्रा च विडङ्गान्यम्लवेतस ॥ विदारी त्रिफला भीरु शृङ्गाटो गुडशर्करा । का-
श्मरीफलयष्ट्याह्वपरूषकहिमानि च ॥ षड्ग्रन्थातिविषादारुपथ्यामरिचहस्तकान् । कृ-
ष्णामूलकचव्यञ्च नागरक्षारचित्रकान् ॥ उष्णाम्लकाञ्जिकक्षीरतोयैः श्लोक समापना-
त् । यथाक्रमं विमिश्रांश्च द्वन्द्वे सर्वांश्च सर्वजे ॥ तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनम् ।
शिशिरोदकपूर्णानां भाजनानांच धारणं ॥ वमनोन्मर्दनस्वेदलङ्घनक्षपणक्रियाः ॥ स्ने-
हादिश्च क्रमः सर्व्वो विशेषेणोपदिश्यते ॥ वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलं ।
न खादेदालुकङ्गुल्मी मधुराणि फलानि च ॥ विना गुल्मेन यच्छूलं गुल्मस्थानेषु जा-
यते । निदानं तस्य वक्ष्यामि रूपञ्च सचिकित्सितं ॥ वातमूत्रपुरीषाणां विग्रहादधिभो-
जनात् । अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥ पानीयपानात्क्षुत्काले विरूढानांच
सेवनात् । विष्टान्नशुष्कमांसानामुपयोगात्तथैव च ॥ एवंविधानां द्रव्याणामन्येषां चोप-
सेवनात् । वायुः प्रकुपितः कोष्ठे शूलं सञ्जनयेद्भृशं ॥ निरुच्छ्वासो भवेत्तेन वेदनाप
डितो नरः । शङ्कस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ॥ शूलासक्तस्य लक्ष्यन्ते तस्माच्छू-
लमिहोच्यते । निराहारस्य तस्यैव तीव्रं शूलमुदीर्य्यते ॥ प्रस्तब्धगात्रो भवति कृच्छ्रेणो-
च्छ्वसितीव च । वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥ एतैर्लिङ्गैर्विजानीयाच्छूलं वा-
तसमुद्भवम् । तृष्णा दाहो मदो मूर्च्छा तीव्रं शूलं तथैव च ॥ शीतामिकामो भवति शी-
तेनैव प्रशाम्यति । एतैर्लिङ्गैर्विजानीयाच्छूलम्पित्तसमुद्भवम् ॥ शूलेनोत्पीड्यमानस्य हृ-
ल्लास उपजायते । अतीव पूर्णकोष्ठत्वं तथैव गुरुगात्रता ॥ एतत्श्लेष्मसमुत्थस्य शूलस्योक्तं

निदर्शनम् । सर्वाणि दृष्ट्वा रूपाणि निर्दिशेत्सान्निपातिकं ॥ सन्निपातसमुत्थानमसाध्यं तं विनिर्दिशेत् । शूलानां लक्षणं प्रोक्तं चिकित्सां च निबोध मे ॥ आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् । तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ पायसैः कृशरापिण्डैः स्निग्धैर्वापिशितैर्हितः । दृष्टच्छाकेन वा स्निग्धमुष्णं भुञ्जीत भोजनं ॥ चिरविल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् वैरङ्गांश्चरसान्स्निग्धान् जाङ्गलान् शूलपीड़ितः यथालाभं निषेवेत मांसानि विलशायिनां । सुरासौवीरकं शुक्तं मस्तु दक्षित्तया दधि ॥ सकाललवण पेयं शूले वातसमुद्भवे । कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥ ससैन्धवः समरिचो धातशूलविनाशनः । विड़ङ्गं शिग्रुकम्पिल्लपथ्याश्यामाम्लवेतसान् ॥ सुरसामश्वकर्णञ्च सौवर्चलयुतान्पिवेत् । मद्येन वातजं शूलं क्षिप्रमेव प्रशाम्यति ॥ पृथ्वीकाजाजिचविकायवानीव्योषचित्रकाः । पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ॥ तानि चूर्णानि पयसा पिवेत्काम्बलिकेन वा । मध्वासवेन चुक्रेण सुरासौवीरकेन वा ॥ अथ वैतानि चूर्णानि मातुलुङ्गरसेन वा । तथा वदरयूषेण भावितानि पुनः पुनः ॥ तानि हिंगुप्रगाढानि सह शर्करया पिवेत् । सहदाडिम सारेण वर्तिः कार्य्या भिषग्जिता ॥ सा वर्त्ति र्वातिकं शूलं क्षिप्रमेव व्यपोहति । गुडतैलेन वा लोढा पीता मद्येन वा पुनः ॥ वुभुक्षाप्रभवे शूले लघु सन्तर्पणं हितम् । उष्णैः क्षीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ॥ वातशूले समुत्पन्ने रूक्षं स्निग्धेन योजयेत् । सुसंस्कृताः प्रदेयाः स्युर्वृतपूरा विशेषतः ॥ वारुणीञ्च पिवेज्जन्तुस्तथा सम्पद्यते सुखी । एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितम् ॥ अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतःपरं । स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः । शीतलानि च सेवेत सर्व्वाण्युष्णानि वर्ज्जयेत् । मणिराजतताम्राणि भाजनानि च सर्व्वशः ॥ वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् । गुडशालियवाः क्षीरं सर्प्पिः पानं विरेचनम् ॥ जाङ्गलानि च मांसानि भेषजं पित्तशूलिनां । रसान्सेवेत पित्तघ्नान् पित्तलानिविवर्ज्जयेत् पालाशं धान्वनं वापि पिवेद्यूषं सशर्करम् । परूषकाणि मृद्वीकाखर्जूरोदकजान्यपि ॥ तत्पिवेच्छर्करायुक्तं पित्तशूलनिवारणम् । अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥ वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् । रूक्षः स्वेदःप्रयोज्यःस्यादन्याश्चोष्णाःक्रियाःहिता ॥ पिप्पलीशृङ्गवेरञ्च श्लेष्मशूले भिषग्जितम् । पाठां वचां त्रिकटुकं तथाच कटुरोहिणीं ॥ चित्रकस्य च निर्यूहं पिवेद्यूषं समार्ज्जकं ॥ एरण्डफलमूलानि मूलं गोक्षुरकस्य च । शालपर्णीं पृश्णिपर्णीं वृहतीं कण्टकारिकां ॥ दद्याच्छृगालविन्नाञ्च सहदेवा तथैव च ॥ महासहां क्षुद्रसहां मूलञ्चेक्षुरकस्य च । एतत्सम्भृत्य सम्भारं जलद्रोणे विपाचयेत् ॥ चतुर्भागावशेषन्तु यवक्षारयुतं पिवेत् । वातिकं पैत्तिकंवापि श्लैष्मिकं सान्निपातिकं ॥ प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः । पिप्पल्यः स्वर्जिकाक्षारो यवाग्निलक

एव च ॥ मेव्यंचैव समानीय भस्म कुर्य्याद्विचक्षणः। तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्जितम् ॥ रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः। स संरुद्धः करोत्याशुन् मानं गुड़गुड़ायनम्। सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासो तदा नरः। नान्नं वाञ्छति नो निद्रामुपैत्यर्त्ति निपीडितः ॥ पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः। तत्र पुष्करमूलानि हिङ्गु सौवर्च्चलं विडं ॥ सैन्धवं तुम्बुरूपथ्याचूर्णं कृत्वा तु पाययेत्। पार्श्व हृद्वस्तिशूलेषु यवक्वाथेन संयुतम् ॥ सर्पिः प्लीहोदरोक्तं वा घृतं वा हिङ्गुसंयुतम्। वीजपूरकसारं वा पयसा सह साधितम् ॥ एरण्डतैलमथ वा मद्यमस्तु पयोरसैः। भोजयेच्चापि पयसा जाङ्गलेन रसेनवा ॥ प्रकुप्यन्ति यदा कुक्षौ वह्निमाक्रम्य मारुतः। तदास्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ॥ उच्छ्वसित्यामशक्तता शूलेनाहन्यते मुहुः। नैवासने न शयने तिष्ठन्न लभते सुखं ॥ कुक्षिशूल इतिख्यातो वातादामसमुद्भवः। वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलम् ॥ संसर्गंपाचनं कुर्य्याद्दद्मैर्दीपनसंयुतैः। नागरं दीप्यकंचव्यं हिंगुसौवर्च्चलं विडं ॥ मातुलुङ्गस्य वोजानि तथा स्यामोरुवूकयोः। वृहत्याः कण्टकार्य्याश्च क्वाथं शूलहरं पिवेत् ॥ वचा सौवर्चलं हिङ्गु कुष्ठं सातिविषाभया। कुटजस्य च वोजानि सद्यः शूलहराणि तु ॥ विरेचनं प्रयुञ्जीत ज्ञात्वा दोषबलाबलम्। स्नेहवस्तीन्निरूहांश्च कुर्य्याद्दोषनिवर्हणं ॥ उपनाहाःस्नेहसेकाः धान्याम्लपरिसेचनम्। कफोपात्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥ हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं परं। स हृच्छूल इतिख्यातो रसमारुतसम्भवः ॥ तत्रापि कर्माभिहितं यदुरःहृद्विकारिणां। संरोधात्कुपितो वायुर्व्वस्तिमावृत्य तिष्ठति ॥ वस्तिवङ्क्षणनाभीषु ततः शूलोऽस्य जायते। विण्मूत्रवातसंरोधी वस्तिशूलः स मारुतात् ॥ नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्दकः। मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात् ॥ वायुः प्रकुपितो यस्य रुक्षाहारस्य देहिनः। मलं रुणद्धि कोष्ठस्थं मन्दोकृत्य तु पावकम् ॥ शूलं सञ्जनयं स्तीव्रं स्रोतांस्यावृत्य तस्य हि। दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥ सर्व्वत्र वर्द्धिते क्षिप्रं शूलं तत्र सघोषवत्। पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते ॥ उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति। विट्शूलमेतज्जानीयाद्भिषक्परमदारुणं ॥ क्षिप्रं दोषहरं कार्य्यं भिषजा साधु जानता। स्वेदनंवमनञ्चैव निरूहाः स्नेहवस्तयः ॥ पूर्व्वोद्दिष्टान्पाययेत योगान्कोष्ठविशोधनान्। उदावर्त्तहराश्चास्य क्रियाः सर्वाः सुखावहाः ॥ अतिमात्रं यदा भुक्तं पावके मृदुतां गते। स्थिरीभूतं तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥ अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति। मूर्च्छाध्मानं विदाहश्च हृदुत्क्लेशो विलम्बिका। विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ॥ क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः। गुल्ममावस्थाः क्रियाः कार्य्या यथावत्सर्व्वशूलिनां ॥

## त्रिचत्वारिंशत्तमोध्यायः ।

अथातः हृद्रोगप्रतिषेधं व्याख्यास्यामः ।

वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः । विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥ दूषयित्वा रसंदोषा विगुणा हृदयं गताः । कुर्व्वन्ति बाधांहृदयेहृद्रोगं तं प्रचक्षते॥ चतुर्व्विधः स दोषैश्च पञ्चमः क्रिमिभिस्तथा । पृथग्लिङ्गं प्रवक्ष्यामि चिकित्सितमनन्तरम् ॥ आयम्यते मारुतजे हृदयं तुद्यते तथा । निर्मथ्यते दीर्य्यते च स्फोटयते पाटयतेऽपि च ॥ तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः । धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवं । माधुर्य्यमपि चास्यस्य बलासावातते हृदि ॥ उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः । अरुचिः श्यावनेत्रत्वं शोषश्च क्रमिजेभवेत् ॥ भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः । क्रमिजे क्रमिजातीनां स्नैष्मिकीणांच ये मताः ॥ वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम् । द्विपंचमूलक्काथेन सस्नेहलवणेन तु ॥ पिप्पल्येला वचा हिंगु यवभस्मानि सैन्धवं । सौवर्चलमथो शुण्ठीमजमोदांच चूर्णितम् ॥ फलधान्याम्लकौलत्थदधिमद्यासवादिभिः । पाययेत विशुद्धंच स्नेहेनान्यतमेन वा । भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतैरसैः ॥ वातघ्नसिद्धं तैलंच दद्याद्वस्तिं प्रमाणतः । श्रीपर्णीमधुकक्षौद्रशीतोपलजलैर्वमेत् । पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥ घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् । तृप्तस्य च रसैर्मुख्यैर्जाङ्गलैः सघृतैर्भिषक् ॥ सक्षौद्रं वितरेद्वस्तिं तैलं मधुकसाधितम् । वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके ॥ चूर्णन्तु पाययेतोक्तं वातजे भोजयेच्चतं । फलादिमथमुस्तादिं त्रिफलां च पिवेन्नरः ॥ श्यामात्रिवृत्कल्कयुतं घृतं वापि विरेचनम् । बलातैलेर्विदध्याच्च वस्तिं वस्तिविशारदः ॥ क्रिमिहृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनम् । दध्ना वा पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥ सुगन्धिभिः सलवणैर्य्योगैः साजाजिशर्करैः । विडङ्गगाढैर्धान्याम्लं पाययेताप्यनन्तरम् ॥ हृदयस्थाः पतन्त्यवमधस्तात्क्रिमयो नृणां । यवान्नं वितरे चास्य स विडङ्गमतःपरम् ॥

## ॥ चतुश्चत्वारिंशत्तमोऽध्यायः ॥

अथातः पांडुरोगप्रतिषेधं व्याख्यास्यामः ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेवमाणस्य विदूष्य रक्तं कुर्व्वन्ति दोषास्त्वचि पाण्डुभावम् ॥ पाण्डुामयोऽष्टार्द्धविधः प्रदिष्टः पृथक् समस्तैर्युगपच्च दोषैः । सर्वेषु चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः ॥ त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथाः । विण्मूत्रपीतत्वमथा वि-

पाको भविष्यतस्तस्य पुरःसराणि ॥ सकामलापालकिपाण्डुरोगः कुम्भाह्वयो लाघरकोऽलसाख्यः । विभाष्यते लक्षणमस्य कृत्स्नं विबोध वक्ष्याम्यनुपूर्वशस्तत् ॥ कृष्णेक्षणं कृष्णसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च । वातेन पाण्डुं मनुजं व्यवस्येदुक्तं तथान्यैस्तदुपद्रवैश्च ॥ पीतेक्षणं पीतसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च । पित्तेन पाण्डुं मनुजं व्यवस्येदुक्तं तथान्यैस्तदुपद्रवैश्च ॥ शुक्लेक्षणं शुक्लसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च । कफेन पाण्डुं मनुजं व्यवस्येदुक्तं तथा न्यैस्तदुपद्रवैश्च ॥ सर्वात्मके सर्वमिदं व्यवस्येद्वक्ष्यामि लिङ्गान्यथ कामलायाः । यो ह्यामयान्ते सहसान्नमम्लमद्यादपथ्यानि च तस्य पित्तम् ॥ करोति पाण्डुं वदनं विशेषात्तन्द्रा बलत्वं प्रथमोदितांश्च ॥ भेदस्तु तस्याः खलु कुम्भसाह्वं शोफो महांस्तत्र च पर्वभेदः । ज्वराङ्गमर्दभ्रमसादतन्द्राक्षमान्वितो लाघरकोऽलसाख्यः ॥ तं वातपिताभिपरीतलिङ्गं हलीमकं नाम वदन्ति तज्ज्ञाः । उपद्रवास्तेष्वरुचिः पिपासा छर्दिर्ज्वरो मूर्द्धरुजाग्निसादः ॥ शोफस्तथा कण्ठगतोऽबलत्वं मूर्छा क्लमो हृदयपीडनं च । साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् । सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैःप्रयोगैः पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव वापि ॥ विरेचनद्रव्यकृतं पिबेति योगांश्च वैरेचनिकान् घृतेन । मूत्रे निकुम्भार्द्धपलं विपाच्य पिबेदभीक्ष्णं कुडवार्द्धमात्रम् । खादेद्गुडं वाप्यभयाविमिश्रमारग्वधादिक्कथितं पिबेद्वा ॥ अयोरजोव्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा । सर्पिर्मधुभ्यां विदधीत वापि शास्त्रप्रदर्शाभिहितांश्च योगान् ॥ हरेच्च दोषान् बहुशोऽल्पमात्रान् । क्षयेद्धि दोषेष्वतिनिर्हृतेषु । धात्रीफलानां रसमिक्षुजं व सम्यं पिबेत्क्षौद्रयुतं हितासी ॥ उभे बृहत्यौरजनीं शुकाख्यां शुकादनीं पिटसकाकमाचीं । आदारिविम्बीं सकदम्बपुष्पीं विपाच्य सर्पिर्विपचेत्कषाये ॥ तत्पाण्डुतः हन्त्युपयुज्यमानं क्षीरेण वा मागधिकां यथाग्निः । हितंच यष्टीमधुकं कषायं चूर्णं समं वा मधुनावलिह्यात् गोमूत्रयुक्तं त्रिफलादनानां दत्वायसंचूर्णमनल्पकालम् । प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा कांचनगैरिकोत्थं ॥ क्षाजं शकृद्वा कुडवप्रमाणं विडं हरिद्रा लवणोत्तमं च । पृथक्पलांशानि समग्रमेतच्चूर्णं हिताशी मधुनावलिह्यात् ॥ मण्डूरलोहाग्निविडङ्गपथ्याव्योषांशकाः सर्वसमानताप्यः । मूत्रास्रुतोऽयं मधुनावलेहः पाण्ड्वामयं हन्त्यचिरेण घोरम् । विभीतकायोमलनागराणां चूर्णं तिलानां च गुडश्चमुख्यः । तक्रानुपानो वटकाप्रयुक्तः क्षिणोति घोरानपि पाण्डुरोगान् ॥ सौवर्चलं हिङ्गुकिराततिक्तकलाय मात्राणि सुखाम्बुना वा । मूर्वाहरिद्रामलकं च लिह्यात्स्थितं गवां सप्त दिनानि मूत्रे । मूलं बचाचित्रकयोः पिबेद्वा पाण्ड्वामयार्त्तोऽक्षसमं हिताशी ॥ सुखाम्बुना वा लवणेन तुल्यं शिग्रोःफलं क्षीरभुजोपयो-

ज्यं। न्यग्रोधवर्गस्य पिबेत् कषायं शीतं सिताक्षौद्रयुतं हिताशी॥ शालादिकं चाप्य-थ सारचूर्णं धात्रीफलं वा मधुनावलिह्यात्॥ विडङ्गमुस्तत्रिफलाजमोदपकषकर्व्योष-विनिर्दहन्यः। चूर्णीकृता वा गुड़शर्करे च तथैव सर्पिर्मधुनी शुभेच॥ समभारमेतद्धि-पचेन्निधाय सारोदके सारवतो गणस्य। जातञ्च लेह्यं मतिमान्विदित्वा निधापयेन्मो-क्षकजे समुद्गी। हन्त्येष लेहः खलु पाण्डुरोगं सशोथमुग्रामपि कामलाञ्च। सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुड़ा च शुण्ठी॥ कालेयके चापि घृतं विपक्वं हितं च तस्माद्रजनीविमिश्रम् धातुं नदीजंजतुशैलजं वा कुम्भाह्वये मूत्रयुतं पिवेद्वा मूत्रस्थितं सैन्धवसम्प्रयुक्तं मासं पिवेद्वापि हि लोहकिट्टम्। दग्ध्वाचकाष्ठैर्मलमायसं वा गोमूत्रनिर्वापितमष्टवारान्॥ विचूर्ण्य लोढ़ं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात्। सिन्धूद्भवं वाग्निसमं च कृत्वा सिक्वा च मूत्रे सकृदेव प्राप्तम्॥ लौहञ्च किट्टं वहुशश्च तप्ता निर्वाप्यमूत्रे वहुशस्तथैव। एकीकृतं गोजलपिष्टमेतदैकध्यमावा-प्य पचेदुखायाम्॥ यथा न दह्यते तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत्। तक्रौ-दनाशो विजयेत रोगं पाण्डुं तथा दीपयतेऽनलञ्च॥ द्राक्षागुडूच्यामलकीरसैश्च सिद्धं घृतं लाघरके हितञ्च। गौडानरिष्टानमधुशर्कराश्च मूत्रासवान् चारकृतांस्तथैव। स्नि-ग्धान् रसानामलकैरुपेतान् कोलान्वितान् वापि हि जाङ्गलानाम्॥ सेवेत शोफाभि-हितांश्च योगान् पाण्डवामयी शालियवांश्च नित्यम्॥ श्वासातिसारारुचिकासमूर्च्छा तृट्छर्दिशूलज्वरशोफदाहान्। तथा विपाकस्वरभेदसादान् जयेद्यथास्वम्प्रसमीक्ष्य शा-स्त्रम्॥ अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशून्यम्। गुदेऽथ शेफस्यथ मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम्॥ विवर्जयेत्पाण्डुकिनं यशोर्थी तथातीसार-ज्वरपीडितञ्च।

## ॥ पञ्चचत्वारिंशत्तमोऽध्यायः ॥

अथातो रक्तपित्तप्रतिषेधं व्याख्यास्यामः।

क्रोधशोकभयायासविरुद्धान्नातपानलान्। कटुम्लवणक्षारतीक्ष्णोष्णातिविदाहिनः॥ नि-त्यमभ्यसतो दुष्टो रसःपित्तञ्चकोपयेत्। विदग्धं स्वगुणैःपित्तं विदहत्याशु शोणितम्॥ ततः प्रवर्त्तते रक्तमूर्द्ध्वं चाधो द्विधापि वा। आमाशयाद्व्रजेदूर्द्ध्वमधःपक्वाशयाद्व्रजेत्॥ विदग्ध योर्द्वयोश्चापिद्विधाभगंप्रवर्तते। केचित्सयकृतप्लीहःप्रवदन्त्यसृजोगतिं॥ ऊर्द्ध्वंसाध्यमधोयाप्यम साध्यंयुगपदुगतम्। सदनंशीतकामित्वं कण्ठधूमायनं वमि:॥ लोहगन्धिश्चनिश्वासो भव-त्यस्मिन्भविष्यति। बाह्यासृग्लक्षणैस्तस्य सङ्गादोषोच्छ्रितीर्विदुः॥ दौर्बल्यश्वासकासज्व-वमयुमदः। पाण्डुता दाहमूर्च्छाः भुक्ते चान्ने बिदाहस्त्वधृतिरपि सदा हृद्यतुल्या च

पीडा। तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च द्वेषो भक्तेऽविपाको वि-
रतिरपि रते रक्तपि त्तोपसर्गाः ॥ मांसप्रक्षालनाभं क्वथितमिव च यत्कर्दमाम्भोनिभं वा
मेदः पूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभं। यत्कृष्णं यच्च नीलं भृशमतिकु-
णपं यत्रचोक्ता विकाराः तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ नादौ
संग्राह्यमुद्रिक्तं यदसृग्बलिनो यतः । तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहं ॥ अधः प्र-
वृत्तं वमनैरूर्द्ध्वभागं विरेचनैः। जयेदन्यतरस्याप्यि क्षीणस्य शमनै रसृक् ॥ अतिप्रवृत्त-
दोषस्य पूर्व्वं लोहितपित्तिनः। अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणं ॥ लङ्घितस्य ततः
पेयां विदध्यात्स्वल्पतण्डुलां। तर्पणं पाचनं लेहान् सर्पींषि विविधानि च ॥ द्राक्षाम-
धुककाश्मर्य्यसितायुक्तं विरेचनम्। यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितम् ॥ पयांसि
शीतानि रसाश्च जाङ्गलाः सतीन यूपाश्च सशालिषष्टिकाः । पटोलशेल्सुनिषण्णयूथि-
कावटातिमुक्ताङ्कुरसिन्दुवारजम् ॥ हितञ्च शाकं घृतसंस्कृतं सदा तथैव धात्रीफल दा-
डिमान्वितम्। रसाश्च पारावतशङ्खकूर्मजास्तथा यवाग्वोऽभिहिता घृतोत्तराः ॥ सन्ता-
निकाश्चोत्पलवर्गसाधिते क्षीरे प्रशस्ता मधुशर्करोत्तमाः। हिमाः प्रदेहा मधुशर्कराश्च
ये घृतानि पथ्यानि च रक्तपित्तिनाम् ॥ मधूकशोभाञ्जनकोविदारजैः प्रियङ्गुकायाः कु-
सुमैश्च चूर्णितैः। भिषग्विदध्याच्चतुरः समाक्षिकान् हिताय लेहानसृजः प्रशान्तये ॥ लि-
ह्याश्च दूर्व्वापटजांश्च पल्लवान्मथ द्वितीयान् सितकर्णिकस्य च। हितञ्च खर्जूरफलं स-
माक्षिकं फलानि चान्यान्यपि तद्गुणान्यथ ॥ रक्तातिभारप्रोक्तांश्च योगानत्रापि योजये-
त्। शुक्लेक्षुकाण्डमापाद्य नवे कुम्भे हिमाम्भसा ॥ योजयित्वा क्षिपेद्रात्रावाकाशे सो-
त्पलन्तु तत्। प्रातः स्रुतं क्षौद्रयुतं पिवेच्छोणितपित्तवान् ॥ पिवेच्छीतकषायं वा जम्-
ब्वाम्राजुर्नसम्भवं। उडुन्दरफलं पिष्ट्वा पिवेत्तद्रसमेव वा ॥ त्रपुषीमूलकल्कं वा सक्षौ-
द्रं तण्डुलाम्बुना। पिवेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥ चन्दनं मधुकं रोध्रमेवमेवं
समं पिवेत्। करञ्जवीजमेवं वा सिताक्षौद्रयुतं पिवेत् ॥ मज्जानमिङ्गुदस्यैवं पिवेन्मधु-
कसंयुतम्। सुखोष्णं लवणं वीजं कारञ्जदधिमस्तुना ॥ पिवेद्वापि त्र्यहं मर्त्यो रक्तपि-
त्ताभिपीडितः। रक्तपित्तहराः शस्ताः षडेते योगसत्तमाः ॥ पथ्याश्चैवावपीडेषु घ्राणतः
प्रसृतेऽसृजि । अतिनिस्रुतरक्तो वा क्षौद्रयुक्तं पिवेदसृक् ॥ यकृद्वा भक्षयेद्रा
जमामं पित्तसमायुतम् । पलाशवृक्षस्वरसे विपक्वं सर्पिः पिवेत्क्षौद्रयुतं सुशीतम् ॥
वनस्पतीनां स्वरसैः सृतं वा सशर्करं क्षीरघृतं पिवेद्वा । द्राक्षासुशीराण्यथ पद्मकं
सिता पृथक्पलांशान्युदकेसमावपेत्। स्थितं निशान्तद्रुधिरामयंजयेत्पीतं पयो वाम्बु-
सम हिताशिनः ॥ तुरङ्गवर्च्चः स्वरसं सशाक्षिकं पिवेत्सिताक्षौद्रयुतं वृषस्य वा। लिहे-
त्त थावास्तुकवीजचूर्णं क्षौद्रान्वितं तण्डुलसाह्वयं वा ॥ लिह्याच्च लाजाञ्जनचूर्णमेकमेवं

सिताक्षौद्रयुतां तुगाख्यां। द्राक्षां सितां तिक्तकरोहिणीञ्च हिमोम्बुना वा मधुकेन युक्तां पथ्यामहिंस्रां रजनींघृतञ्चलिह्यात्तयाशोणितपित्तरोगी॥वासाकषायोत्पलमृत्प्रियङ्गु, लेत्र-घ्नजाम्भोरुहकेशराणि। पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु॥ गायत्रिजम्ब्वर्जुनकोविदारशिरीषरोध्राशनशाल्मलीनां। पुष्पाणि शिग्रोश्च विचूर्ण्य-लेह्या मध्वन्वितः शोणितपित्तरोगी॥ रक्षौद्रमिन्दीवरभस्म वारि करञ्जबीजं मधुसर्पि-षीच। जम्ब्वर्जुनाम्बक्वथितञ्च तोयं तोयं घ्नन्ति त्रयः पित्तमसृक्च योगाः। मूलानि पुष्पाणि च मातुलङ्गः पिष्ट्वा पिबेत्तण्डुलधावनेन॥ घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयोवा। द्राक्षारसं क्षीरघृतं पिबेद्वासंशर्करञ्चेक्षुरसं हिमं वा॥शीतोपचारं म-धुरञ्च कुर्य्यात्विशेषतः शोणितपित्तरोगे। द्राक्षाघृतक्षौद्र सितायुतेन विदारिगन्धादिवि-पाचितेन॥ क्षीरेणचास्थापनमग्रमुक्तं हितं घृतञ्चाप्यनुवासनार्थम्॥ प्रियङ्गुरोध्राञ्जन-गैरिकोत्पलैःसुवर्णकालीयकशङ्खचन्दनैः। सिताश्वगन्धाम्बुदयष्टिकाह्वयैर्मृणालसौगन्धि कतुल्यपेषितैः॥ निरूह्य चैनं पयसा समाक्षिकैर्घृतप्लुतैः शीतजलाम्बुसेचितम्। क्षी-रौदनं भुक्तमथानुवासयेद्घृतेन यष्टीमधुसाधितेन च॥ अधोवहं शोणितमाशु नाशयेत्त-थातिसारं रुधिरस्य दुस्तरम्। विरेकयोगेत्वतिचैव शस्यते वाम्यञ्च रक्ते विजिते बलान्वि-तः॥ एवंविधा उत्तरवस्तयश्च मूत्राशयस्थे रुधिरे विधेया। प्रवृत्तरक्तेषु च पायुजेषु कु-र्य्याद्विधानं खलु रक्तपैत्तम॥विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्य्योविजानता। शस्त्रकर्म-णि रक्तं वा यस्यातीव प्रवर्त्तते॥ त्रयाणामपि दोषाणां शोणितस्य च सर्वशः। लिङ्गा-न्यालोक्य कर्त्तव्यं चिकित्सित मनन्तरम्॥

## षट्चत्वारिंशत्तमोध्यायः॥

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः।

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः। विघातादभिघाताद्वा हीनसत्त्वस्य वा पुनः करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च।निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः॥ हृत्पीडा जृम्भनं ग्लानिः संज्ञानाशो बलस्य च। सर्वासां पूर्वरूपाणि यथास्वमुपलक्ष-येत॥ संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैति सहसा सुखदुःखव्य-पोहकृत॥ सुखदुःखव्यपोहाच्च नरः पतति काष्टवत्। मोहोमूर्च्छेति तां प्राहुः षड्विधा-सा प्रकीर्त्तिता॥ वातादिभिः शोणितेन मद्येन च विषेण च। षट्स्वताखपि पित्तं हि प्रभुत्वेनावतिष्ठते॥पृथ्वस्थिव्यम्भमोरूपं रक्तगन्धश्च तन्मयः। तस्माद्रक्तस्य गन्धेन मू-र्च्छन्ति भुवि मानवाः॥ द्रव्यभाव इत्येके दृष्ट्वा यदभिमुह्यति। गुणास्तीव्रतरत्वेन स्थि-तास्तु विषमद्ययोः॥ तएव तस्माज्जायन्ते ताभ्याम्मोहा यथेरिताः। स्वस्थाङ्गदृष्टिरत्व रुजा गूढोच्छ्वासश्च मूर्च्छितः॥ मद्येन विलपन् शेते नष्टविभ्रान्तमानस। गात्राणि

विच्छिपन्मूसी जरां यावन्न याति तत् ॥ वेपथुस्त्वप्रलापाः स्युः स्तम्भश्च विषमूर्च्छिते। वेदितव्यन्तीव्रतरं यथास्वं विषलक्षणैः ॥ सेकावगाही मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च। ।शीतानि पानानि च गन्धवन्ति सर्व्वासु मूर्च्छास्वनिवारितानि ॥ सितात्प्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वर सान्वितानि। खर्ज्जूरकाश्मर्य्यरसैःशृतानि पानानि सर्प्पींषि सजीवनानि ॥ सिद्धानिवर्गे मधुरे पयांसिसदाडिमाजाङ्गलजा रसाश्च। तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याश्च सदा सतीनाः ॥ भुजङ्गपुष्पं मरिचान्युशीरं कोलस्य मध्यञ्च पिवेत्समानि। सतीनतोये लोनविसं स्तृण चौद्रेण कृष्णा सितया च पथ्याम् ॥ कुर्य्याच्च नासावरनावरोधं चरंपिवेद्वाप्यथमानुषीणाम्। मूर्च्छाप्रसक्तास्तु शिरोविरेकैर्ज्जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः ॥हरीतकीक्काथघृतं पिवेद्वा धात्रीफलानां स्वरसैः कृतं वा। द्राक्षासितादाडिमलाजवन्तिशीतानि नीलोत्पलपद्मवन्ति ॥पिवेत्कषायाणि च गन्दवन्ति पित्तज्वरं यानि शमं नयन्ति । प्रभूतदोषस्तमसोऽतिरेकात्संमूर्च्छितो नैव विबुध्यते यः ॥ संन्यस्तसंज्ञो भृशदुश्चिकित्स्योज्ञेयस्तदावुद्धिमता मनुष्यः। यथामलोष्टं सलिले निसिक्तं समुद्धरेदाद्धविलीनमेव॥तद्वच्चिकित्सेत्त्वरयाभिषक्तमवेदनंस्त्वयशप्रयातम्। तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगैस्तथा नखाभ्यन्तरतीव्रपातैः ॥ वादित्रगीतानुनयैरपूर्व्वैर्व्विघट्टनैर्गुप्तफलावघर्षणैः ॥ आभिः क्रियाभिश्च न लब्धसंज्ञः सानाहलालाश्वसनश्ववर्ज्यः प्रभूतसंज्ञं वमनानुलोम्यैस्तीक्ष्णैर्व्विशुद्धं लघुपथ्यभुक्तम् ॥ फलत्रिकैश्चित्रकनागराद्यैस्तथाश्मजातात्जतुनः प्रयोगैः । सशर्करैर्मांससुपक्रमेत विशेषतोजीर्णघृतं स पाय्यः ॥ यथास्वञ्च ज्वरघ्नानि कषायाण्युपयोजयेत्। सर्वमूर्च्छापरीतानां विषजानां विषापहम् ॥

## सप्तचत्वारिंशत्तमोऽध्यायः ॥

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः।

मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च । रूक्षताशुकरञ्चैव व्यवायि च विकाशि च ॥ औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्तिमनोगतिं। विशत्ययववान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत्। मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकर्म्मकृत्॥ हर्षदञ्च व्यवायित्वाद्विकासित्वाद्विसर्पति। तदम्लं रसतः प्रोक्तं लघुरोचनदीपनम् ॥ केचिल्लवणवर्ज्यांस्तु रसानत्रादिशन्ति हि। स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ॥ भवेदायःप्रकर्षाय वलायोपचयाय च ॥ काम्यता मन सस्तुष्टिर्द्धैर्य्यं तेजोऽतिविक्रमः । विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः॥तदेवाव्रमचन्नेनसेव्यमानममात्रया॥ कायाग्निनाह्यग्निसमं समेत्यकुरुते मदम्। मदेन करणानान्तु भावान्यत्वे कृते सति ॥ निगूढमपि भावं हि स्वम्प्रकाशीकुरु-

तेऽवशः। चावस्थश्च मदोज्ञेयः पूर्व्वो मध्योऽथ पश्चिमः। पूर्व्वे वीर्य्यरतिप्रतिहर्षभाष्या-दिवर्द्धनम्॥ प्रलापो मध्यमे हर्षो यक्तायुक्तक्रियास्तथा। विसञ्ज्ञः पश्चिमे शेते नष्टकर्म-क्रियागुणः॥ श्लेष्मिकानल्पपित्तांश्च स्निग्धान्मात्रोपसेविनः। पानं न बाधतेऽत्यर्थं विप-रीतांस्तु बाधते॥ निर्भक्तमेकान्ततएव मद्यं निषेव्यमाणं मनुजेन नित्यम्। उत्पादये-त् कष्टतमान्विकारान् नापादयेच्चापि शरीरभेदम्॥ क्रुद्धेन भीतेन पिपासितेन शोका-भितप्तेन बुभुक्षितेन। व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि॥ अत्यम्ल-भक्ष्यावततोदरेण साजीर्णभुक्तेन तथा बलेन। उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान्॥ पानात्ययं परमदम्पानाजीर्णमथापिवा। पानविभ्रममु-ग्रञ्च तेषां वक्ष्यामि लक्षणम्॥ स्तम्भाङ्गमर्द्दहृदयग्रहतोदकम्पाः पानात्ययेऽनिलकृते शि-रसो रुजश्च स्वेदप्रलापमुखशोषदाहमूर्च्छाः पित्तात्मके वदनलोचनपीतता च। श्लेष्मा-त्मके वमथुशीतकफप्रसेकाः सर्व्वात्मके भवति सर्व्वविकारसम्पत्। उष्मा शरीरगुरुता वि-रसाननत्वं श्लेष्माधिकत्वमरुचिर्मलमूत्रसङ्गः॥ लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा-स्तृष्णारुजा शिरसि सन्धिषु चापि भेदः। आध्मानमुद्गिरणमम्लरसो विदाहोऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम्॥ ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपज-नितानि च कारणानि। हृद्गात्रतोदवमथुज्वरकण्ठधूम मूर्च्छाकफस्रवणमूर्द्ध्वरुजो वि-दाहः॥द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः। हीनोत्तरौ-ष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं बिजह्यात्॥ जिह्वौष्ठदन्तमसितं त्वथ-वापि नीलं पीते च यस्य नयने रुधिरप्रभे च। हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः का-सभ्रमावपि च पानहतं भजन्ते॥ तेषां निवारणमिदं हि मयोच्यमानं व्यक्ताभिधानम-खिलेन विधिं निबोध। मद्यन्तु चुक्रमचिरार्द्रकदीप्यकुष्ठ सौवर्चलायुतमलं पवनस्य शान्त्यै॥ पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्व्वा सौवर्चलेनच युतं वितरेत्सुखाय। आम्रात-काम्लफलदाडिममातुलुङ्गैः कुर्य्याच्छुभान्यपि च षाडवपानकानि॥ सेवेत वा फल र-सोपहितान्नसादो नानूपवर्गपिशितान्यपि गन्धवन्ति। पित्तात्मके मधुरवर्गकषायमि-श्रं मद्यं हितं समधुशर्करमिष्टगन्धम्॥ पीत्वा च मद्यमपि चेत्तु रसप्रगाढं निःशेषतश्च-णामवस्थितमुल्लिखेच्च। लावैणतित्तिरिरसांश्च पिबेदनम्लान्मौद्गान्सुखाय सघृतान् स-सितांश्च यूषान्॥ पानात्यये कफकृते कफमुल्लिखेच्च मद्येन बिल्वविदुलोदकसंयुतेन। सेवेत तिक्तकटुकांश्च रसोनुदारान् यूषांश्च तिक्तकटुकोप हितान् हिताय॥ पथ्यं यवा-न्न विकृतान्यपिजाङ्गलानि श्लेष्मघ्नमन्यदपि यच्च तिरत्ययं स्यात्। कुर्य्याच्च सर्व्वमथ स-र्व्वभवे विधानं द्वन्द्वोद्भवे द्वयमवेक्ष्य यथा प्रधानम्॥ सामान्यमन्यदपि यत्सुसमग्रमग्र्यं वक्ष्यामि यच्च मनसोमदकृत्सुखञ्च त्वङ्नागपुष्पमगधैलमधूकधान्यैः॥ खर्ज्जूरजाजि-

मरिचैश्च कृतं समांशै. ॥ पानं कपित्थरसवारिपरूषकाढ्यंपानात्ययेषु विधिवत्स्व्रुतज-
म्बराल्तं । ह्रीवेरपद्मपरिपेलवसम्प्रयुक्तैः पुष्पैः प्रलिप्य करवीरजलोद्भवैश्च ॥ पिष्टैः सप-
द्मकयुतैरपि-सारिवाद्यैःसेकं जलैश्च वितरेदमलैः सुशीतैः । त्वक् पत्रचोचमरिचैलभुज-
ङ्गपुष्प श्लेष्मातकप्रसव कल्कगुडैरुपेतम् ॥ द्राक्षायुतं घृतमलं मदिरामयार्त्त स्तत्पानकं
शुचि सुगन्धि नरैर्निषेव्यम् । पिष्ट्वा पिवेच्च मधकं कटुरोहिणीञ्च द्राक्षाञ्च मूलमसकृत्
त्रपुसीभवं यत् ॥ कार्पासमूलमथ नागबलाञ्च तुल्यां पीत्वा सुखी भवति साधुसुवर्चला-
ञ्च । काश्मर्य्यदारुविडदाडिमपिप्पलीषु द्राक्षान्वितासु कृतमम्बुनि पानकं यत्॥ तद्बी-
जपूरकरसायुतमाशु पीतंशान्ति परां मदगदेष्वचिरात्करोति । द्राक्षासितामधुकजीर-
रकधान्यकृष्णास्वेवं कृतं व्यहत या च पिवेत्तथापि ॥ सौवर्च्चलायुत सुदाररसं फलाम्लं
भार्गीशृतेन चजलेन हितावसेकः । इक्षाकुधामार्गववृचकानि काकह्वयोडुम्बरिकाश्च
दुग्धे । विपाच्य तस्याञ्जलिना वमेद्धि मद्यं पिवेदह्नि गते त्वजीर्णे ॥ त्वक्पिप्पलीभुजग-
पुष्पविडैरुपेतं । सेवेतहिङ्गुमरिचैलयुतं फलाम्लं । उष्णाम्बुसैन्धवयुतास्त्वथ वा बिडत्व-
क्चव्यैलहिङ्गुमगधाफलमूलशुण्ठीः ॥ हृद्यैः खडैरपि च भोजनमत्र शस्तं द्राक्षाकपि
त्थफलदाड़िमपानकं यत् । तत्पान विभ्रमहरं मधुशर्कराढ्य माम्रातकोलरसपानकमेव
वापि ॥ खर्जूरवेत्रकरवीरपरूषकेषु द्राक्षाव्हतु च कृतं ससितं हितं वा । श्रीपर्णि-
युक्तमथ वा तुपिवेदिमानि षष्ट्याह्वयोत्पलहिमाम्बुविमिश्रितानि ॥ क्षीरिप्रवालविस-
जीरकनागपुष्प पत्रैलवालुशितशारिवपद्मकानि । आम्रातभव्यकरमर्दकपित्थकोल
वृक्षाम्लवेत्रफलजीरकदाड़िमानि॥ सेवेत वा मरिचजीरकनागपुष्प त्व कपत्रविश्वचविकी-
लयुतान् रसांश्च । सूक्ष्माम्बरस्रुतहिमांश्च सुगन्धिगन्धान् । पानोद्भवान्नुदति समगदान-
शेषान् ॥ पञ्चेन्द्रियार्थविषया मृदुपानयोगा हृद्याः सुखाश्च मनसः सततन्नियो-
ज्याः ॥ पानात्ययेषु विकटोरुनितम्बवत्यः पीनोन्नतस्तनभरा नतमध्यदेशाः ॥ प्रौ-
ढाःस्त्रियोऽभिनवयौवनपीनगात्राः सेव्याश्च पञ्चविषयातिशयस्वभावाः । पिवेद्रसं
पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तम् । संचूर्ण्य संयोज्य च नागपुष्पैरजाजि-
कृष्णामरिचैश्च तुल्यैः ॥ वर्षाभुयष्ट्याह्न मधूकलाक्षात्वक्खर्जुरादाराङ्गुरजीरकाणि ।
द्राक्षाञ्च कृष्णामथ केशरञ्च क्षीरे समालोड्य पिवेत्सुखोष्णं ॥ भवेच्चमद्येन तु
येन पात्रितः प्रकामपीतेन सुरासवादिना । तदेव तस्मै विधिवत्प्रदापयेद्विपर्य्यये भ्रंश-
मसौ च गच्छति ॥ यथा नरेन्द्रोपहतस्य कस्यचिद्भवेत्प्रसादस्तत एवमान्यतः । विच्छि-
न्नमद्यः सहसा योऽतिमद्यं निषेवते । तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि ॥
मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि च । स्रोतांसि शोषयेयातां तेन तृष्णा प्रजायते ।
पाटलोत्पलकन्देषु मुद्गपर्ण्या च साधितम् ॥ पिवेन्मागधिकामिश्रं तत्राम्भोहिमशीत-

लम्। सर्पिस्तैलवसामज्जदधि भृङ्गरसैर्युतम्॥ क्वाथेन विल्वयवयोः सर्व्वगन्धैश्च पेषितैः। पक्वमभ्यञ्जने श्रेष्ठं सेके क्वाथः सुशीतलः॥ रसवन्ति च भोज्यानि यथास्वमवचारयेत्। पानकानि सुशीतानि हृद्यानि सुरभीनि च। त्वचं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः। दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम्॥ शीतं विधानमत ऊर्द्ध्वमहं प्रवक्ष्ये दाहप्रशान्तिकरमृद्धिमतां नराणां। तत्रादितो मलयजेन हितः प्रदेहः चन्द्रांशुहारतुहिनोदकशीतलेन। शीताम्बुशीतलतरैश्च शयानमेवं हारैस्तु बालबलयैरबलाः स्पृशेयुः भिन्नोत्पलोज्ज्वलहिमे शयने शयीत पत्रेषु वा सजलविन्दुषु पद्मिनीनां। आसादयन्पवनमाहृतमिष्टगन्धकह्लारपद्मदलशैवलसञ्चयेभ्यः॥ शीतैर्वनान्तपवनैः परिस्पृश्यमानः प्रीतश्चरेद्वनकाननदीर्घिकासु। दाहाभिभूतमथ वा परिषिचयेत्तु शीतैरुशीरजलचन्दनवारिभिस्तम्॥ विश्रावितां हृतमलां नववारिपूर्णां पद्मोत्पलोज्ज्वलजलामधिवासिताञ्च। वापीं भजेत हरिचन्दनभूषिताङ्गः कान्ताकरस्पर्शकर्कशरोमकूपः॥तत्रैनमम्बुरुहपत्रसमैः सुशन्तः शीतैः करोरुवदनैः कठिनैःस्तनैश्च। तोयावगाहकुशला मधुरस्वाभावाः संहर्षयेयुरबला मधुरैः प्रलापैः॥ धारागृहे प्रगलितोदकदुर्दिनाभे क्लान्तः शयीत सलिलानिलशीतकुक्षौ। गन्धोदकैः सकुसुमैरुपसिक्तभूमौ पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये॥ मांसीतमालघनकुङ्कुम मञ्जपत्र जात्युत्पलप्रियककेशरपुण्डरीकैः। पुन्नागनागकरवीरकृतोपकारे तस्मिन्गृहे कमलरेणुरुणे शयीत॥ यत्राहृतानिलविकम्पितपुष्पदाम्नि हैमन्तविन्ध्यहिमवन्मलयाचलानाम्। शीताम्भसां सकदलीहरितद्रुमाणाम् उद्भिन्ननीलनलिनाम्बुरुहाकराणाम्॥ चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञा ग्लानं सुदीन मनसं मनसोऽनुकूलाः। पीनस्तनोरुजघना घनसारदिग्धाः ता एवमार्द्रवसनाः सह संविशेयुः॥ श्लिष्टावलाः शिथिलमेखलहारयष्टाः॥ हर्षयेयु पुनर्नार्यः स्वगुणैरहसि स्थिताः। ताः शैत्याच्छमयेयुश्च पित्तपानात्ययं स्त्रियः॥ रक्तपित्तत्वषादाहेष्वयमेव विधिः स्मृतः। सामान्यतो विशेषन्तु शृणुदाहेष्वशेषतः॥ कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ह्यति। सञ्चूष्यते दह्यते च ताम्राभस्ताम्रलोचनः॥ लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते। तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत्॥ अप्रशाम्यति दाहे च रसैस्तृप्तस्य जाङ्गलैः॥ शाखाश्रया यथान्यायं रोहणीर्व्यधयेत्सिराः॥ पित्तज्वरसमः पित्तात्स चाप्यस्य विधिर्हितः। तृष्णानिरोधादब्धातौ चीणे तेजः समुत्थितम्॥ स बाह्याभ्यन्तरं देहं दहेद्वै मन्दचेतसः। संशुष्कगलताल्वोष्ठोजिह्वां निःकृष्य वेपते॥ तत्रोपशमयेत्तेजस्त्वब्धातुञ्च विवर्द्धयेत। पाययेत्कामसमश्च शर्कराढ्यं पयोऽपि वा॥ शीतामिक्षुरसं मन्थं वितरेच्चेरितं विधिम्। असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः॥ विधिःसद्योव्रणीयोक्तस्तस्य लक्षणमेव च। धातुक्षयोक्तो यो दाहस्तेन मूर्च्छा तृषान्वितः॥ क्षामस्वरः क्रियाहीन ससीदेशदृभृ-

पीडितः । रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः ॥ क्षतजेनाऽन्नतश्चान्यः शोचतोवाप्यनेकधा । तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ॥ तमिष्टविषयोपेतं सुहृद्भिरपि संवृतम् । क्षीरमांसरसाहारं विधिनोक्तेन साधयेत् ॥ मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः । सर्व एव च वर्ज्याः स्युः शीतगात्रेषु देहिषु ॥ एवंविधो भवेद्यस्तु मदिरामयपीडितः । प्रशान्तोपद्रवस्यापि शोधनं प्राप्तमाचरेत् ॥ सजीरकाण्यार्द्रकशृङ्गवेरसौवर्चलान्यर्द्धजलप्लुतानि । मद्यानि हृद्यान्यथ गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णां ॥ जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशां । पिबेत्सुरां नैव लभेत् रोगान् मनोमतिघ्नश्च मदं न याति ॥

## अष्टचत्वारिंशत्तमोध्यायः ॥

अथातः तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः ।

सततं यः पिबेद्वारि न तृप्तिमधिगच्छति । पुनः काङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत् ॥ संक्षोभशोकश्रममद्यपानाद्रूक्षाम्लशुष्कौष्णकटूपयोगात् । धातुक्षयाल्लङ्घनसूर्य्यतापात् पित्तञ्च वातश्च भृशं प्रवृद्धौ । स्रोतांसि संदूषयतः समेतौ यान्यम्बुवाहीनि शरीरिणां हि । स्रोतः स्वपां वाहिषु दूषितेषु जायेत तृष्णा प्रबला ततस्तु । तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च । स्यात्सप्तमी भक्तनिमित्तजा तु लिङ्गानि तासां शृणु चौषधानि ॥ तालवोष्ठकण्ठास्यविशोषदाहाः सन्तापमोहभ्रमविप्रलापाः । पूर्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु विशेषतो हि । शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरोगलेषु । स्रोतो निरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धमेति । मूर्छा प्रलापारुचिवक्त्रशोषाः पीतेक्षणत्वं प्रततश्च दाहः ॥ शीताभिकाङ्क्षा मुखतिक्तता च पित्तात्मिकायां परिधूमनञ्च । वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णाबलासेन भवेत्तु तत्र ॥ निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् । शीतज्वरच्छर्दिररोचकश्च कफात्मिकायां त्वचि पाक एव ॥ एतानि रूपाणि भवन्ति यस्याल्लयार्दितः काङ्क्षति नाति चाम्भः । क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ॥ तयाभिभूतस्य निशादिनानि गच्छन्ति दुःखं पिबतोऽपि तोयम् । रसक्षयाद्याक्षयसम्भवा सा तयाभिभूतस्य निशादिनेषु ॥ पेपीयतेऽम्भः स सुखन्न याति तां सन्निपातादिति केचिदाहुः । रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ॥ त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्व्वन्नमेवाशु तृषां करोति ॥ क्षीणं विचित्तं बधिरं तृषार्त्तं विवर्जयेन्निर्गतजिह्वमाशु । तृष्णाभिवृद्धावुदरेच पूर्णं तं वामयेन्मागधिकोदकैः

न ॥ विलेपनं चात्र हितं वदन्ति स्याद्दाडिमाम्रातकमातुलुङ्गैः । तृष्णा प्रयोगैरिह सा निवार्य्या शीतैश्च सम्यक्प्रसवीर्य्यजातैः ॥ गण्डूषमम्लैर्विरसे च वक्त्रे कुर्य्याच्छुभैरामलकस्य चूर्णैः । सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्टैः कृतं वा सिकतोपलैर्वा ॥ जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं चौद्रयुतं हिमं वा । पञ्चाङ्गिकाः पञ्चगणा य उक्ता तेष्वम्बुसिद्धं प्रथमे गणे वा ॥ पिबेत्सुखोष्णं मनुजोऽल्पशस्तु तृषां विमुच्येत हि वातजायाः पित्तघ्नवर्गेण कृतः कषायः सशर्करः चौद्रयुतः सुशीतः ॥ पीतास्तृषां पित्तकृतान्निहन्ति चीरं घृतं वाप्यथ जीवनीयैः । विल्वाढ़की कण्टकपञ्चमूलीदर्भेषु सिद्धं कफजान्निहन्ति हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन । सर्वासु तृष्णास्वथवापि पैत्तं कुर्य्याद्विधिस्तेन विना न शान्तिः ॥ पर्व्वागतोडुम्बरजो रसस्तु सशर्करस्तत्क्वथितोदकं वा । वर्गस्य सिद्धस्य च सारिवादेः पातव्यमम्भः शिशिरं तृषार्त्तैः। कशेरुशृङ्गाटकपद्ममोचविशेषु सिद्धं चतजान्निहन्ति ॥ नोलोत्पलैर्शीरकुचन्दनानि दत्वा प्रवाते निशिवासयेत्तु । तदुत्तमं तोयमुदारगन्धि सितायुतं चौद्रयुतन्तथैव॥ द्राक्षाप्रगाढञ्च हिताय वैद्यः तृष्णार्द्दितेभ्यो वितरेन्नरेभ्यः ॥ ससारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे च । कुर्य्यात्कषायञ्च यथैव युक्तं मधूक पुष्पादिषु वापरेषु ॥ राजादनचीरिकपीतनेषु षट्पानकान्यत्र हितानि च स्युः । सतुण्डिकेरीस्त्वथवा पिबेत्तु पिष्टानि कार्पाससमुद्भवानि ॥ चतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः । चयोत्थितां चीरघृतं निहन्यान्मांसोदकं वा मधूकोदकं वा ॥ आमोद्भवां विल्ववचायुतानां जयेत्कषायैरथ दीपनानां । आम्रातभल्लातबलायुतानि पिबेत्कषाण्यथ दीपनानि ॥ गुर्व्वन्नजातां वमनैर्जयेच्च चयादृते सर्वकृतास्तृष्णाः । असोद्भवां मांसरसो निहन्ति गुडोदकं वाप्यथवापि मन्थः ॥ भक्तोपरोधात्तृषितोयवागूमुष्णां पिबेन्मन्थमथो हिमंच । या स्नेहपीतस्य भवेच्च तृष्णा तत्रोष्णमम्भः प्रपिबेन्मनुष्यः ॥ सद्योद्भवामद्यजलं निहन्ति मद्यं तृषां यापि हि मद्यपस्य । उष्णोद्भवां हन्तिजलं सुशीतं सशर्करञ्चेक्षुरसं तथाम्भः । स्वैः स्वैः कषायैर्वमनानि तासां तथा ज्वरोक्तानि च पाचनानि । लेपावगाहौपरिषेचनानि कुर्य्यात्तथा शीतगृहाणि चापि ॥ संशोधनं चीररसौ घृतानि सर्व्वासु लेहान्मधुरान् हिमांश्च ॥

## ॥ एकोनपञ्चाशत्तमोऽध्याय ॥

### अथातश्छर्दिप्रतिषेधमध्यायं व्याख्यास्यामः ।

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि । अकाले चातिमात्रैश्च यथासात्म्यैश्च भोजनैः ॥ श्रमात् चयात्तथोद्वेगादजीर्णात्क्रिमिदोषतः । नार्य्याश्चापन्नसत्वायास्तथातिद्रुतमश्नतः ॥

वीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् । छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥ निरुच्यते छर्दिरिति दोषोवक्त्रं प्रधावितः । दोषानुदीरयन् हृद्यानुदानो व्यानसङ्गतः ॥ ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनां । हृल्लासोद्गाररोधो च प्रसेके लवणस्तनुः ॥ द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणं । प्रच्छर्दयेत्फेणिलमल्पमल्पं शूलार्दितोऽभ्यर्दितपार्श्वपृष्ठः ॥ श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं सानिलजा वमिस्तु । योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा ॥ सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा । यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धम् । अभक्तरुग्गौरवसादयुक्तोवमेद्वमी सा कफकोपजा स्यात् । सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्व्वदोषप्रभवा मता तु ॥ वीभत्सजा दौहृद जामजोच या सात्म्यतो वा क्रमिजाच या हि । सा पञ्चमी तांश्च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥ आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्माद्धितं लङ्घनमेव तासु । शूलहृल्लासबहुला क्रमिजा च विशेषतः ॥ क्रमिहृद्रोगतुल्येन लक्षणेन च सूचिता।क्षीणस्योपद्रवैर्युक्तांसास्रक्पूयांसचन्द्रिकाम्॥छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितम् । वमीषु बहुदोषासुच्छर्दनं हितमुच्यते ॥ विरेचनं वा कुर्वीत तथाद्दोषोच्छ्रयं भिषक् । संसर्गाश्चानुपूर्वेण यथास्वभेषजाय ताम् ॥ लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाचरेत् । यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥ हन्यात्क्षीरघृतं पीतंछर्दिं पवन सम्भवाम् ।। मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥ यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् । पिबेद्वाव्यक्तसिन्धूत्थफलाम्लं वैष्किरं रसं ॥ सुखोष्णलवणं वात्र हितं स्नेहविरेचनम् । पित्तोपशमनीयानि पानानि शिशिराणि च ॥ कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीं । शोधनं मधुरैश्चात्र द्राक्षारससमायुतैः ॥ बलवत्यां प्रशंसन्ति सर्पिस्तैल्वकमेव च । आरग्वधादिभिर्यूषं दशाङ्गयोगमेव च ॥ पाययेताथ सक्षौद्रं कफजायां चिकित्सकः । कृतङ्गडूच्या विधिवत्कषायं हिमसंज्ञितम् ॥ तिसृष्वपि भवेत्पथ्यं माक्षिकेण समन्वितम् । वीभत्सजां हृद्यतमैर्दौहृदां काङ्क्षितैः फलैः ॥ लङ्घनैर्वमनैश्चासां सात्म्यैश्चासात्म्यकोपजां ॥ क्रमिहृद्रोगवच्चापि क्रमिजां साधयेद्वमीं ॥ वितरेच्च यथादोषं शस्तं विधिमनन्तरम् । दधित्थरससंयुक्तां पिप्पलीमाक्षिकान्वितां मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते । समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥ तर्पणं वा मधुयुतं तिसृणामपि भेषजम् । स्वयङ्गुप्तः सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवां ॥ पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः । युक्ताम्ललवणाः पिष्टाः कुस्तुंवुर्य्योऽथवा हिताः ॥ तण्डुलाम्बुयुतं खादेत्कपित्थं चूर्णेणेन वा । सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ॥ पिबेत्पयोऽग्नितप्तञ्च निर्वाप्य श्वहगोधिकां । सर्पिं क्षौद्रयुतान् वापि लाजशक्तून्पिबेत्तथा । सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा।

धाचोरसे चन्दनं वा शृतं मुद्गदलाम्बु च । कोलामलकमज्जानं लिह्याद्वा विसुगन्धिकं । सक्षौद्रां शालिलाजानां यवागूं वा पिबेन्नरः ॥ प्रेयाख्युपहरेच्चापि मनोघ्राणसुखानि च । जाङ्गलानि च मांसानि स्वादुवत्पानकानि च । भोजनानि विचित्राणि कुर्य्यात्सर्वाखतन्द्रितः ॥

## पञ्चाशत्तमोऽध्यायः ॥

अथातो हिक्काप्रतिषेधं व्याख्यास्यामः ।

विदाहिगुरुविष्टम्भिरुक्षाभिष्यन्दिभोजनैः। शीतापानासनस्थानरजोधूमानिलानलैः॥ व्यायामकर्मभाराध्ववेगाघातापतर्पणैः । आमदोषाभिघातस्त्रीक्षयरोगप्रपीड़नैः ॥ विषमाशनाध्यनैस्तथा संशमनैरपि । हिक्का श्वासश्च कासश्च नृणां समुपजायते॥मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लीहान्त्राणि मुखादिवाक्षिपन्। सघोषवानाशुहिनस्त्यसून् यतस्ततस्तु हिक्केति भिषग्भिरुच्यते॥अन्नजांयमलांक्षुद्रांगम्भीरां महतीं तथा।कफेनानुगतो वायुः पञ्चहिक्काः करोति हि ॥ मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः । पूर्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥ पापान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥ चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते । कम्पयन्ती शिरोग्रीवं यमलान्तां विनिर्दिशेत्॥विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते।क्षुद्रिकानाम सा हिक्का जत्रुमूलात्प्रधाविता॥नाभिप्रवृत्तायाहिक्का घोरा गम्भीरनादिनी । शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥ अनेकोपद्रवयता गम्भीरा नाम सा स्मृता । मर्माण्यापीडयन्तीव सततंयाप्रवर्त्तते॥देहामायाम्यवेगेनघोषयत्यतिलष्यतः।महाहिक्केतिसा ज्ञेया सर्वगात्रप्रकम्पिनी॥आयस्यते हिक्कतोऽङ्गानियस्यदृष्टिश्चोर्द्ध्वं ताम्यतेयस्य गाढम्।क्षीणोऽन्नद्विट्कासते[illegible]यश्चहिक्की तौद्वावन्त्यौ वर्ज्जयेद्विक्रमानौ॥प्राणायामोद्वेजनत्रासनानिसूचीतोदैः संभ्रमश्चात्र शस्तः।यष्ट्याह्वं वा माक्षिकेणात्रपोडःपिप्पल्यो वाशर्कराचूर्णयुक्ताः॥ सर्पिःकोष्णं चोरमिक्षोरसो वा नातिक्षीणे स्रंसनं छर्दनञ्च। नारीपयःपिष्टमशुक्लचन्दनं घृतं सुखोष्णं च ससैन्धवं तथा ॥ चूर्णीकृतं सैन्धवमम्भसा तथा निहन्ति हिक्काञ्च हितंच नस्यतः । युञ्ज्याद्धूपं शालनिर्यासजातं नैपालं वा गोविषाणोद्भवं वा ॥ सर्पिःस्निग्धैश्चर्मबालैः कृतं वा हिक्कास्थाने स्वेदनं वापि कार्य्यम् । क्षौद्रोपेतं गैरिकं काञ्चनाह्वं लिह्याद्भस्म ग्राम्यसत्वास्थि जंवा ॥ तद्वच्छ्वाविन्मेषगोशल्यकानां रोमाण्यन्तर्दूमदग्धानि पात्र । मध्वाज्याक्तं वर्हिपत्रप्रसूतमेवं भस्मौडुम्भरंतैस्वकं वा॥ स्वर्जिक्षारं वीजपुराद्रसेनक्षौद्रोपेतं हन्ति लीढ्वाशु हिक्काम् ॥ सर्पिःस्निग्धाघ्नन्तिहिक्कां यवाग्वः कोष्णाग्रासाःपायसो वा सुखोष्णः ॥ शुण्ठीतोये साधितक्षीरमाजन्तद्वत्पीतं शर्करासंयुतं पा । आदृस्सेर्वा सेव्यमा-

नं निहन्यादप्राप्त्वा हिक्कामाशु मतं त्वजाव्योः ॥ सपूतिकीटं लशुनोग्रगन्धाहिङ्गुजमा-चूर्ण्य सुभावितन्तत् ॥ क्षौद्रं सितां वारणकेशरञ्च पिबेद्रसेनेक्षुमधूकजेन । विबेत्पलं वा लवणोत्तमस्य द्वाभ्यां पलाभ्यां हविषः समग्रं ॥ हरीतकीं कोष्णजलानुपानां पिबेद्घृतं क्षारमधुप्रपन्नम् । रसङ्कपित्तान्मधुपिप्पलीभ्यां पिचुप्रमाणं प्रपिबेत्सुखाय ॥ कृष्णां सितां चामलकञ्च लीढं सशृङ्गवेरं मधुनाथवापि । कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुना च लीढम् ॥ पाटलायाः फलं पुष्पं गैरिकं कटुरोहिणी । खर्जूरमध्यं मागध्यः काशीशं मधुनाम च ॥ चत्वारोयूषयोगाः स्युः प्रतिपादप्रदर्शिताः मधुद्वितीयाः कर्त्तव्यास्ते हिक्कासु विजानता ॥ कपोतपारावतलावशल्यकश्वदंष्ट्रगोधावृषदंशजान् रसान् । बिल्वत्फलाम्लानतिमान् ससैन्धवान् स्निग्धांस्तथैरण्य मृगादिजाङ्गवान् ॥ विरेचनं पथ्यतमं ससैन्धवं घृतं सुखोष्णं च शितोपलायुतम् । सदागतावूर्ध्वगतेऽनुवासनंवदन्ति केचिच्चहिक्किनाम् ॥

## ॥ एकपञ्चाशत्तमोऽध्यायः ॥

अथातः श्वासप्रतिषेधं व्याख्यास्यामः ।

यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते । तैरेव कारणैः श्वासो घोरो भवति देहिनां ॥ विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः । श्वासयत्यूर्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥ क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चधा । भिद्यते स महाव्याधिः श्वासएको विशेषतः ॥ प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा । आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च ॥ किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते । निषण्णस्यैति शान्तिञ्च [स क्षुद्र इति संज्ञकः ॥ छट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः । विशेषाद्दुर्दिने ताम्येच्छ्वासः स्यात्तमको मतः ॥ घोषेण महताविष्टः सकासः सकफो नरः । यः श्वसित्यबलोऽन्नद्विट् सुप्तमकपोडितः ॥ स शाम्यति कफे हीने स्वपतश्च विवर्द्धते । मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः ॥ आध्मानो दह्यमानेन वस्तिना सरुजं नरः । सर्व्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नन्तमादिशेत् ॥ निःसंज्ञः पार्श्वशूलार्त्तः शुष्ककण्ठोऽति घोषवान् । संरब्धनेत्रस्त्वायम्य यः श्वस्यात्स महान्स्मृतः ॥ मर्म्मस्वायम्यमानेषु श्वसन्मूढ़ो मुहुश्च यः । ऊर्द्ध्वप्रेक्षी हतरवस्तमूर्द्ध्वश्वासमादिशेत् ॥ क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते । त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च । स्नेहवस्तिं विना केचिदूर्द्ध्वञ्चाधश्च शोधनम् । मृदुप्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥ कासे श्वासे च हिक्कायां हृद्रोगे चापि पूजितं । घृतं पुराणं संसिद्धमभयाविडरामठैः ॥ सौवर्च्चलाभयाविल्वैः संस्कृतं वा नवं घृतम् । पिप्पल्यादिप्रततोवापं सिद्धं वा प्रथमे गणे ॥ संचलवणं सर्प्पिः श्वासकासौ व्य-

पोहति । हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥ द्विचीरं साधितं सर्पिश्चतुर्गुणजलान्वितम् । कोलमात्रैः पिवेत्तद्धि श्वासकासौ व्यपोहति ॥ अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा । कल्के वृषकषाये वा पचेत्सर्पिश्चतुर्गुणे॥तन्मूलं कुसुमाद्यं वा शीतं चौद्रेण योजयेत् । शृङ्गीमधुरिकाभार्गी शुण्ठीतार्क्ष्यसिताम्बुदैः ॥ सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः । घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥ श्वासङ्कासन्तथा हिक्कां सर्पिरेतन्नियच्छति । सुवहा कालिकाभार्गी सुकाख्यानैचुलम्फलं ॥ काकादनीं शृङ्गवेरं वर्षाभूं बृहतीद्वयम् । कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलाढकम्॥कटूष्णं पीतमेतद्धि श्वासामयविनाशनम् । सौवर्च्चलयवक्षारकटुकाव्योषचित्रकैः ॥ वचाभयाविडङ्गैश्च साधितं श्वासशान्तये । गोपवल्ल्युदके सिद्धं स्याद्न्यदद्विगुणे घृतम् ॥ तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः । विल्वपुष्करतूतीकसौवर्च्चलकणाग्निभिः ॥ पथ्या तेजोवतीयुक्तैः सर्पिर्जलचतुर्गुणम्।हिङ्गुपादयुतं सिद्धं सर्व्वश्वासहरम्परम्॥पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः।वासा घृतं षट् फलञ्च घृतं चात्रहितं भवेत्॥तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे सेव्यमानं यथान्यायंश्वासकासौ व्यपोहति॥फलाम्ला विष्किररसाः स्निग्धाः प्रव्यक्तसैन्धवाः एणादीनां शिरोभिर्वा कोलैस्तथा वा सुसंस्कृताः । हन्युः श्वासञ्चकासञ्चसंसस्कृतानिपयांसि च।तिनिशस्य च बीजानि कर्कटाख्या सुवर्चिका॥दुरालभाश्च पिप्पल्यः कटुकाख्याः हरीतकी।श्वाविच्छल्ययूररोमाणि कोला मागधिका कणाः॥भार्गीत्वक्शृङ्गवेरञ्च शर्कराशकाङ्गजम् । त्रिकण्टकस्य बीजानि चूर्णितानि तु केवलं ॥ पञ्चश्लोकार्द्धिकास्त्वेते लेहा ये सम्यगीरिताः । सर्पिः मधुभ्यां ते लेह्याः कासश्वासार्दितैर्नरैः ॥ सप्तच्छदस्य पुष्पाणि पिप्पल्योश्चापि मस्तुना । पिबेल्लवणं मधुना धानाश्चाप्यथ भक्षयेत् ॥ भर्क्षाङ्कुरैर्भावितानां यवानां साध्वने क्रमः । तर्पणं वा पिबेदेषा सक्षौद्रं श्वासपीड़ितः ॥ शिरीषकदलीकुन्दपुष्पमागधिकायुतम् । तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥ कोलमज्जतालमूलसृष्यचर्ममसीमपि । लिह्यात्क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुतां ॥ निम्बैः कदम्बबीजं वा सक्षौद्रं तण्डुलाम्बुना । द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभां ॥ सर्पिर्मधुभ्यां विलिहञ्छन्ति श्वासान् सुदारुणान् हरिद्रां मरिचं द्राक्षा गुडं रास्ना कणा शटीं ॥ लिह्यात्तैलेन तुल्यानि श्वासार्त्तो हितभोजनः । शया पुरीषस्वरसं मधुमागधिकायुतम् ॥ लेहः श्वासेषु कासेषु वाजिनां वा शकृद्रसः । पाण्डुरोगेषु शोथेषु ये योगाः सम्प्रकीर्त्तिताः ॥ श्वासकासापहास्तेऽपि कासघ्ना ये च कीर्त्तिताः । भार्गीत्वक्च्यूषणं तैलं हरिद्रां कटुरोहिणीं ॥ पिप्पलीं मरिचं चण्डाङ्गोशकृद्रसमेव च । तत्र कीटस्य बीजेषु पचेदुत्कारिकां शुभां ॥ सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान् ।पुराणसर्पिः पिप्पल्यः कौलतथा जाङ्गला रसाः ॥ सुरासौवीरकं हिङ्गु मातुलुङ्गरसो मधु । द्राक्षा श-

निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिर्विपर्य्ययः प्रसङ्गए-कान्तोऽनेकान्तःपूर्व पक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणमतिक्रान्तावेक्षणं संशयो व्याख्यानं स्वसंज्ञानिर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति ॥ आसां तन्त्रयुक्तीनां किं प्रयोजनमित्युच्यते वाक्ययोजनमर्थयोजनञ्च ॥ भवन्ति चात्र श्लोकाः ॥ असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् । स्ववाक्यसिद्धिरपि च क्रियते त-न्त्रयुक्तितः ॥ व्यक्तानोक्ताश्च ये ह्यर्था लीना ये चाप्यनिर्मलाः । लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम् ॥ यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥ प्रबोध्यस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः । यमर्थमधिकृत्योच्यते तदधिकरणं यथा रसं दोषं वा ॥ येन वाक्यं युज्यते स योगः यथा । तैलं पिवेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः । सिद्धं बलाभ्याञ्च सदेवदारु हितायनित्यङ्गलगण्डरोगी ॥ सिद्धं पिवेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेवं दूरस्थानामपि पदानामेकीकरणं योगः ॥ योऽर्थो भिहितः सूत्रे पदे वा स पदार्थः । अपरिमिताश्च पदार्थाः ॥ यथा स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यो यथा । वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः ॥ कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति । ऋग्वेदादयस्तु वेदास्तत्र पूर्वापरयोगमुपलभ्य विद विचारणे विद विन्दत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगः पश्चात्प्रतिपत्तिर्भवति । आयुर्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः ॥ यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः ॥ यथा मृत्पिण्डोद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥ समासकथनमुद्देशः । यथा । शल्यमिति ॥ विस्तरवचनं निर्देशः । यथा । शारीरमागन्तु चेति ॥ एवमित्युपदेशः । यथा । तथा न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्जयेत् अनेन कारणेनेत्युपदेशः ॥ यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति । प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः ॥ यथा देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति । प्रकृतस्यानागतेन साधनमतिदेशः ॥ यथानेनास्य वायुरूर्द्ध्वमुपतिष्ठते तेनोदावर्तःस्यादिति॥ अभिव्याप्यापकर्षणमपवर्गः ॥ यथाऽस्वेद्या विषोपसृष्टाअन्यत्र कीटविषादिति । येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः ॥ यथाशिरः पाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि गम्यते पुरुष एवोक्त इति । यदकीर्तितमर्थादापद्यते सार्थापत्तिः । यथौदनं भक्ष्य इत्युक्तेऽर्थापन्नं भवति नायं पिपासुर्यवागूमिति ॥ यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्य्ययः ॥ यथा कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति । प्रकरणान्तरेण समापनं प्रसङ्गः ॥ यथा प्रकारान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः । यथा । महाभूतशरीरिस-

मवायः पुरुषस्तस्मिन् क्रिया सोधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्यायां पुनः
रुक्तं यतोऽभिहितं प ञ्चमहाभूतशरीरिसमवायः पुरुष इति स खल्वेवं कर्मपुरुषश्चिकि
त्सायामधिकृतः ॥ सर्वत्र यदवधारणेोच्यते स एकान्तः ॥ यथा त्रिवृद्विरेचयति मदन
फलं वामयतीति । क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकार्थः ॥ यथा केचिदाचार्य्या ब्रु
वते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्य्यं केचिद्विपाकमिति ॥ आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः ॥
यथा कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥ तस्योत्तरं निर्णयः । यथा
शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं प्रसृजन्ति चात एवमसाध्या
वातजा इति।यथा चोक्तम् ॥ कृत्स्नं शरीरं निष्पीड्य मेदो मज्जावसायुतः।अधःप्रकुपते
वायुस्तेनाध्यास्तु वातजाः॥परमतमप्रतिषिद्धमनुमतं यथान्यो ब्रूयात् सप्तरसा इति ।
प्रकरणानुपूर्व्याभिहितं विधानम्॥यथा सक्थिमर्माण्येकादश प्रकरणानुपूर्वाभिहितानि
एवं वक्ष्यतीत्यनागतावेक्षणम्॥यथा श्लोकस्थाने ब्रूयाच्चिकित्सितेषु वक्ष्यामीति ॥ य
पूर्वमुक्तं तदतिक्रान्तावेक्षणम्॥यथा चिकित्सितेषु ब्रूयात्श्लोकस्थाने यदीरितमिति ।
उभयहेतुदर्शनं संशयः । यथा तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनमप्राणह-
रमिति ॥ तन्त्रातिशयोपवर्णनं व्याख्यानं ॥ यथेहपञ्चविंशतिकः पुरुषोऽत्र व्याख्याय-
ते । अन्येष्वायुर्व्वेदतन्त्रेषु भूतादिप्रकृत्यारभ्यचिन्ता । अन्यशास्त्रासामान्ताख्यसंज्ञा
। यथा मिथुनमिति मधुसर्पिषोर्ग्रहणं ॥ लोके प्रथितमुदाहरणं । यथोष्णभयाच्छीत-
मनुधावति ॥ निश्चितं वचनं निर्वचनं । यथायुर्विद्यतेऽस्मिन्ननेनवायुर्विन्दतीत्यायु-
र्वेदः ॥ दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम् ॥ यथाग्निर्वायुनासहितः कोष्टे वृ-
द्धिङ्गच्छतितथा वातपित्तकफदुष्टो व्रणइति ॥ इदमेव कर्त्तव्यमिति नियोगः । यथा-
पथ्यमेव भोक्तव्यमिति इदञ्चेदञ्चेति समुच्चयः । यथामांसवर्गे एणहरिणलावतित्तिरि-
तयोय शारङ्गाः प्रधानमिति ॥ इदञ्चेति विकल्पः । यथारसौदनः सघृतायवागूर्वा ॥ यद
रुपयुज्यते दिष्टं बुद्धिमता तदूह्यं ॥ यथाभिहितमन्नपानविधौ चतुर्विधञ्चान्नमुपदिश्यते ॥ भ
ग्रासान्त भोज्यं लेह्यं पेयमेवञ्चतुर्विधे वक्तव्ये द्विविधमभिहितमतोह्यमिति ॥ अन्नपानैर्विशि-
प्रथितदृष्टगु ष्टे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवति।किञ्चान्यत्।अन्ने न भक्ष्यमवरुद्धं त्वन्नसा-
देहेच सुलव ग्भ्यात्।पेयेनलेह्यं द्रवसाधर्म्यात्।चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति।द्वाविंश
पगमने कुचो गु क्तयो ह्येतास्तन्त्रसारगवेषणे। मया सम्यग्विनिर्दिष्टा शब्दन्यायार्थसंयुताः॥ योह्येत
वधिवद्वेत्ति दीपीभुतास्तु बुद्धिमान्। स पूजार्हो भिषक् श्रेष्ठ इति धन्वन्तरेर्म्मतम् ॥

## षट्षष्टितमोऽध्यायः ॥

अथातो दोषभेदविकल्पनामाध्यायं व्याख्यास्यामः ।

द्वात्रिं

अष्टाङ्गायुर्वेदविदं दिवोदासं महामतिम् । छिन्नशास्त्रार्थसन्देहं सूक्ष्मागाधमि-
दधिम् ॥ विश्वामित्रसुतः श्रीमान्सुश्रुत परिपृच्छति । द्विषष्टिर्दोषभेदा ये पुरस्ता-
परिकीर्त्तिताः ॥ कति तत्रैकशो ज्ञेया द्विशो वाप्यथवा त्रिशः। तस्य तद्वचनं श्रुत्वा सं-
शयच्छिन्महातपाः ॥ प्रीतात्मा नृपशार्दूलः सुश्रुतायाह तत्त्वतः । त्रयो दोषा धातवश्च
पुरीषं मूत्रमेव च ॥ देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः । पुरुषः षोडशकलः प्रा-
णाश्चैकादशैव ये॥ रोगाणान्तु सहस्रं यच्छतं विंशतिरेव च। शतञ्च पञ्चद्रव्याणां त्रिसप्तत्यधि-
कोत्तरम् ॥ व्यासतः कीर्त्तितं तद्धि भिन्नदोषास्त्रयोगुणाः । द्विषष्टिधा वदन्त्येते भूयि-
ष्ठमिति निश्चयः ॥ त्रयएव पृथक् दोषा द्विशो नव समाधिकैः । त्रयोदशाधिकैकद्विस-
मध्योल्वणैस्त्रिशः॥ पञ्चाशदेवन्तु सह भवन्ति चयमागतैः । क्षीणमध्याधिकक्षीणक्षीणवृ-
तथापरैः॥ द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा । मिश्रधातुमलैर्दोषा यान्त्य-
यतां पुनः ॥ तस्मात्प्रसङ्गं संत्यज्य दोषभेदविकल्पनैः। रोगं विदित्वोपचरेद्रसभेदैर्व्य-
रितैः ॥ भिषक्कर्त्ताथ करणं रसा दोषास्तु कारणम् । कार्य्यमारोग्यमेवैकमनारोग्य-
मतोऽन्यथा ॥ अध्यायानान्तु षट्षष्ट्या ग्रथितार्थपदक्रमम् । एवमेतदशेषेण तन्त्रमुत्तर-
मुद्दिशत् ॥ स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम् । यथाविधि यथाप्रश्नं भवतां परिकी-
र्तितम्॥ सहोत्तरं त्वेतदधीत्य सर्वं ब्राह्मं विधानेन यथोदितेन। न हीयतेऽर्थान्मनसोऽभ्युपे-
तादेतद्वचो ब्राह्ममतीव सत्यम् ॥

इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं समाप्तम् । समाप्तश्चायं ग्रन्थः ॥

तेनांशेन प्रसीदन्तु यः कश्चित्तन्निरीक्षितः । याचिता भगवत्पूर्वंप्रसादेनाऽत्रसज्जनाः॥१॥

—***—

